द्धिशक्त्योः परस्परविषयविषयिभावापन्नत्वात् । स्वबुद्धिशक्त्या शुद्धया स्वात्मानन्दं समश्नुते मुक्त इति वक्तुमुचितमन्यथा पाषाणप्रायमुक्तौ न केषांचित्प्रवृत्तिर्भवेत् । तस्मान्मुक्तात्मन्यपि पराहङ्कारमयबुद्धिशक्तिः पुष्पगन्धवत् जलशैत्यवत् अग्नितदीयौष्ण्यवत् दीपदीप्तिवत् अहिकुण्डलवत् संगच्छतेतरां; बुद्धिशक्तिवृत्तीनां नित्यत्वाभ्युपगमात् । 'आत्मरतिरात्मक्रीडः' 'चिन्मात्रोऽहं सदाशिवः' 'अहं ब्रह्मास्मि' इत्यादि श्रुतेः ॥ १ ॥

मूलम्—

यदा लेलायते ह्यर्चिस्समिद्धे हव्यवाहने ।
तदाज्यभागावन्तरेणाहुतीः प्रतिपादयेत् श्रद्धया हुतम् ॥

एवं मोक्षार्थानि कर्माणि विधाय 'द्वे विद्ये वेदितव्ये' इति ब्रह्मविदाज्ञावाक्येन वेदितव्यत्वेन प्राप्तायाः ऋग्वेदादि लक्षणपरविद्याया अपि ब्रह्मप्रापकत्वात् । तदुक्ताग्निहोत्रादि यावत्कर्मानुष्ठानस्याप्यावश्यकत्वे मुमुक्षूणाम् । 'मन्त्रेषु कर्माणि' इत्यत्र कर्मपदार्थे संकोचानौचित्यभ्रमो माभूदित्याशयेन श्रुतिरेव भगवती अग्निहोत्रादिपशुकर्माणि तिरस्कृत्य प्रथमतस्तत्तदस्थिरफलानि प्रदर्श्य च पुनरावृत्तिरहित मोक्षफलापेक्षिणः पशुकर्मभ्यो निवर्तयति यदेति—
यदा—यस्मिन् काले, हव्यवाहने—अग्नौ, समिद्धे—इन्धनादिभिः

प्रज्वलिते सति, अर्चिरग्नेः शिखा लेलायते—चलति, तदा हि—तस्मिन् काले आज्यभागौ—आज्यभागयोरन्तरेण, मध्ये आहुतीः प्रतिपादयेत्—प्रतिक्षिपेत् । तदेतत् श्रद्धया हुतं भवतीत्यर्थः ॥ २ ॥

पशुकर्मणः फलम्

मूलम्—

यस्याग्निहोत्रमदर्शमपौर्णमास-
मचातुर्मास्यमनाग्रयणमतिथिवर्जितं च ।
अहुतमवैश्वदेवमविधिनाहुत-
मासप्तमांस्तस्य लोकान् हिनस्ति ॥ ३ ॥

यस्येति—यस्याग्निहोत्रिण – अग्निहोत्रमग्निहोत्राख्यं कर्म । अदर्शं—दर्शाख्यकर्मरहितम् । अपौर्णमासं—पौर्णमासाख्येष्टिरहितम् । अचातुर्मास्यं—चातुर्मास्यकर्मणा विरहितम् । अनाग्रयणं — शरत्कालकर्तव्यताकाग्रायणाख्येनेष्टिविशेषेण वर्जितम् । अतिथिवर्जितं च—अतिथिसत्कारवर्जितम् । अहुतं—होमरहितम् । अवैश्वदेवं—वैश्वदेवकर्मवर्जितम् । अविधिना हुतं यथाशास्त्रमननुष्ठितम् । अनुष्ठितमप्यग्निहोत्रादिकर्म तस्य अग्निहोत्रिणः फलभूतान् आसप्तमान्—सत्याख्यसप्तमलोकपर्यन्तान् लोकान्—भूरादीन् हिनस्ति—नाशयति । यद्यपि दर्शपूर्णमासादिकमग्निहोत्राङ्गं न भवति तथाप्यग्निहोत्रे अदर्शमित्यादि विशेषणं नित्यनैमित्तिकं यावत्कर्मानुष्ठेयमित्यत्र

तात्पर्यप्रकाशार्थम् । तथा चाग्निहोत्रादिसकलकर्मणां यथाशास्त्रमनुष्ठाने तत्तत्कर्मानुगुण्येन प्राप्या ये भूरादयः सत्यन्ताः लोकास्ते यथाशास्त्रं यावत्कर्मानन्नुष्ठाने न प्राप्यन्ते कर्त्रा इत्यर्थः ॥ ३ ॥

काली कराली च मनोजवा च
सुलोहिता या च सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरुची च देवी
लेलायमाना इति सप्तजिह्वाः ॥ ४ ॥

कालीति—देवीति पदं विश्वरुच्या विशेषणम् । तथा च मन्त्रोक्तप्रकारेण काल्यादिभेदात् अग्नेः सप्तजिह्वा इत्यर्थः ॥ ४ ॥

एतेषु यश्चरते भ्राजमानेषु
यथाकालं चाहुतयो ह्याददायन् ।
तं नयन्त्येतास्सूर्यस्य रश्मयो
यत्र देवानां पतिरेकोधिवासः ॥ ५ ॥

एतेषु भ्राजमानेषु—दीप्यमानेषु जिह्वाभेदेषु यथाकालं—यस्य कर्मणः यस्मिन् कालेऽनुष्ठानं तत्कालं विहित कालानतिक्रमणेनेत्यर्थः । आददायन्—होमद्रव्यं गृह्णन् ।

'भूरादयस्त्रयो लोकास्सपातालास्सहार्णवाः। ब्रह्मणो दिनपर्यन्ते संह्रियन्ते पुनः पुनः॥ अह्नरादौ च सृज्यन्ते यथापूर्वं मुहुर्मुहुः। जनलोकादयः सर्वे लीयन्ते ब्रह्मणः क्षये' इति शिवतत्त्वरत्नाकरोक्तप्रकारेण अग्निहोत्रादि कर्मसाध्य ब्रह्मलोकपर्यन्तानामपि लोकानां क्षयिष्णुत्वात् तत्साधक कर्माणि निन्द्यन्ते। 'प्लवाह्येते अदृढा' इत्यादिना – अष्टा दशोक्तं – षोडशर्त्विक् पत्नीयजमानरूपाष्टादशकर्त्राश्रित त्वेनोक्तम्। अवरं–पाशाश्रयत्वादश्रेष्ठम्। कर्म–पशुकर्मेत्यर्थः। येषु– यजमानेषु वर्तते। एते यज्ञरूपाः– यज्ञप्रधानाः पुरुषाः, अदृढा – जीर्णाः, प्लवा – अल्पनौका इव 'उडुपन्तु प्लवः कोलः' इत्यमरोक्तेः। भवाब्धिसंतरणासमर्थाः। एतत्– पशुकर्म, श्रेयः – श्रेयस्करम्, येऽभिनन्दन्ति – तुष्यन्ति, ते मूढाः – अविवेकिनः। इदमत्र तेषां मौढ्यं 'अमृतस्य देवधारणो भूयासम्' 'सद्यो लिङ्गं स्थापयति पाणिमन्त्रं पवित्रम्' 'ॐ नमो ब्रह्मणे धारणं मेऽस्त्वनिराकरणं धारयिता भूयासम्' 'मोक्षार्थिनां मुक्तिहेतुर्लिंगं धारणमीर्यते' इत्यादि परश्शत श्रुतिस्मृतीतिहासपुराणादिवाक्यैः भस्मधारण, रुद्राक्षधारण, पंचाक्षरीमहामनुजप, हरगुरुचरचरणार्चन, तदर्पितग्रहणेष्टलिङ्गध्यानधारणादि पतिकर्मणां पुनरावृत्तिरहितमोक्षफलविधायकत्वे ऽप्यनवगतपतिकर्मतत्त्वलेशाः बह्वायाससाध्यास्थिरस्वर्गादिफलकपशुकर्मणामेव श्रेयस्कर-

त्वमित्यभिमन्यन्तीति । अतस्ते जरां मृत्युं च पुनरेव भूयो भूय एवापियन्ति – प्राप्नुवन्तीत्यर्थः । तदुक्तं रेणुकभगवत्पादाचार्यैरपि 'चोदिताः परमेशेन स्वस्वकर्मानुसारतः । स्वर्गं वा नरकं वापि प्राणिनो यान्ति कर्मिण ॥ पुनः कर्मविशेषेण जायन्ते गर्भकोटरात् । जाताः मृताः पुनर्जाताः पुनर्मरणभाजिनः । भ्रमन्ति घोरसंसारे विश्रान्तिकथया विना ॥' इति ॥

यद्वा अष्टादशपदेनाष्टादशविद्याश्रयो वेदो लक्ष्यते । अष्टादशविद्याश्चोक्ताः शैवे वायवीयसंहितायाम् – 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्याह्येताश्चतुर्दश ॥ आयुर्वेदो धनुर्वेदो ह्यथ गन्धर्ववेदकः । अर्थशास्त्रान्तरं तस्माद्विद्याह्यष्टादश स्मृताः ॥ अष्टादशानामेतासां विद्यानां भिन्नवर्त्मनाम् । आदिकर्ता कविस्साक्षात् शूलपाणिरिति श्रुतिः ।' 'विद्या ह्यष्टादश प्रोक्ता वैदिका रेणुकेश्वर । इदानीं शैवतन्त्राणां लक्षणं कथय प्रभो' इति चोळरेणुकसंवादे चोळभूपालवाक्याच्चाष्टादशानां विद्यानां वैदिकत्वं सिद्धमेव । तेनोक्तं कथितमवरं वरात् पुनरावृत्ति रहितादपवर्गसाधकादनवद्यात् पशुविससनादिरहितात् पतिकर्मणः भिन्नमवरं कर्म पुनरावृत्तिसहितफलजनकमनवद्यं पशुविससनमांसभक्षणसुरापानाद्यनेकदोषदुष्टं पशुकर्मेत्यर्थः । येषु यजमानेष्वनुष्ठेयत्वेन वर्तते, तदेतत्स्वानुष्ठे-

यमवरं कर्म वस्तुतोऽश्रेयस्करमपि श्रेयः—श्रेयस्करमभिनन्दन्ति प्रहृष्यन्ति ये ते – एते मूढा – भ्रान्ता यज्ञरूपा- यज्ञस्यैव रूपं स्वरूपमस्थैर्यमेषां ते । यज्ञः रूप्यते – निरूप्यते निर्वर्त्यते यैस्ते यज्ञरूपाः – यज्ञनिर्वर्तका इति वार्थः । अदृढाश्चपलाः, प्लवा – वानरा इव 'उडुपे वानरे भेके प्लुते कारण्डवे प्लवः' इति निघण्टुपाठात् चपलचित्ताः शिवलिङ्गध्यानधारणादि राहित्यात् । अशान्ताः – पशुकर्मिणः । जरां मृत्युं च पुनरेवापि भूयो भूय एवापि यन्ति–प्राप्नुवन्ति हि । यथा चपलचित्ता कपयः कंचित्कालं फलपुष्पमाधुर्यमकरन्दादि रमणीयवृक्षविशेषमारुह्य तत्रत्य फलादीनुपभुज्य स्वकर्मवशात् परित्यक्तवृक्षविशेषा, अधोऽवतीर्य संचरन्तः कालक्रमेण जरामनन्तरं मरणं च प्राप्नुवन्ति ; तथैवैते कर्मिणः स्वकर्मानुगुण्येन स्वर्गादि चतुर्मुखलोकपर्यन्तमपि लोकमारुह्य तत्रत्य रमणीय रमणीमण्यादीनपि विषयानुपभुज्य क्षीणे स्वपुण्ये मर्त्यलोकमवतीर्य संसरन्तो जरां मरणं च प्राप्नुवन्तीति भावः ॥ ७ ॥

अविद्यायामन्तरे वर्तमानाः
स्वयं धीराः पण्डितं मन्यमानाः ।
जंघन्यमानाः परियन्ति मूढाः
अन्धेनैव नीयमाना यथान्धाः ॥ ८ ॥

अविद्यायामिति— अविद्यायां – क्लेशमूलायामन्तरे – मध्ये, वर्तमानाः अविवेकिनः पुरुषाः। स्वयं – स्वयमेव, धीरा – धीमन्तः स्वात्मानं पण्डितं मन्यमानाः। वस्तुतो मूढाः अत एव अन्धेनैव नीयमाना यथान्धा गर्तकण्टकादिना पीड्यन्ते, तथा जंघन्यमाना – भृशं हन्यमानाः पीड्यमानाः परियन्ति – संसरन्तीत्यर्थः ॥ ८ ॥

अविद्यायां बहुधा वर्तमाना
वयं कृतार्था इत्यभिमन्यन्ति बालाः।
यत्कर्मिणो न प्रवेदयन्ति रागात्
तेनातुराः क्षीणलोकाश्च्यवन्ते ॥ ९ ॥

अविद्यायामिति—अविद्यायां बहुधा – बहुप्रकारं वर्तमाना वयं कृतार्थाः – वयमेव कृतकृत्या इत्यभिमन्यन्ति बालाः – बालिशसमाः, अज्ञानिन इत्यर्थः। यत् यस्मात् कारणात् कर्मिणः – पशुकर्मिणः रागात् – कर्मफलेऽनुरागात् न प्रवेदयन्ति – लिङ्गधारणदीक्षाविरहात् शिवत्वं – शाश्वत फलप्रदं न जानन्ति। तेन कारणेन आतुराः—व्याकुलचित्ताः। क्षीणलोका – नष्टस्वकर्मसाध्यस्वर्गादिलोकाः। च्यवन्ते – भ्रष्टा भवन्तीत्यर्थः ॥ ९ ॥

इष्टापूर्तं मन्यमाना वरिष्ठं
नान्यत् श्रेयो वेदयन्ते प्रमूढाः।

नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वा
इमं लोकं हीनतरं वा विशन्ति ॥ १० ॥

इष्टापूर्तमिति— इष्टापूर्तं – 'त्रिष्वथ क्रतुकर्मेष्टं पूर्तं खातादि कर्म च' इत्यमरोक्तं श्रेयस्करमिति मन्यमाना अन्यत् – इष्टापूर्तकर्मभिन्नं । वरिष्ठं – श्रेष्ठम्, पाशानाश्रयत्वात् हिंसादिदोषशून्यत्वात् पतिकर्म वस्तुतः श्रेयस्करमपि, न वेदयन्ते – न जानन्ति, ये ते प्रमूढाः – अतिशयेन मोहान्धा, नाकस्य – स्वर्गस्य, पृष्ठे – ऊर्ध्वस्थाने, सुकृते – सुकृतकर्मसाध्ये लोके, अनुभूत्वा – कर्मफलमनुभूय, क्षीणेपुण्ये इमं लोकं – मर्त्यलोकम्, हीनतरं वा – अस्मान्मर्त्यलोकादपि हीनतरमत्यन्तजुगुप्सितं, नरकादि लक्षणं वा विशन्ति ॥ १० ॥

'हिंसादि दोषमुक्तत्वाद्विशुद्धश्चित्तसाधनः । ध्यान यज्ञः परस्तस्मादपवर्गफलप्रदः ॥ तस्मादशुद्धं स्वर्गीयमनित्यं बाह्यसाधनम् । यज्ञाद्यं कर्म सन्त्यज्य योगं मुक्त्यर्थमभ्यसेत् । 'ध्यानज्ञानात्मकः सूक्ष्मः शिवयोगो महामखः । विशिष्टः सर्वयज्ञानामसङ्ख्यातैर्महामखैः' इति शिवधर्मोक्तप्रकारेण पशुकर्माणि सन्त्यज्य ज्ञानिभिः पतिकर्माणि मोक्षफलकान्यनुष्ठेयानीत्याशयवान् मन्त्रः प्रवर्तते—

पतिकर्मानुष्ठानफलम्

तपः श्रद्धे ये ह्युपवसन्त्यरण्ये
शान्ता विद्वांसो भैक्षचर्यां चरन्तः ।
सूर्यद्वारेण ते विरजाः प्रयान्ति
यत्रामृतः स पुरुषो ह्यव्ययात्मा ॥ ११ ॥

तपः श्रद्धे इति— तपश्च-शिवाश्रमोचितो धर्मः । न तु प्राकृतो धर्मः । शिवाश्रमोचितधर्माश्चोक्ताः शिवधर्मे, 'शिवार्चाग्निपरो नित्यं तद्भक्तानां च भोजनम् । परमैथुनवर्जी स्यात् श्रीमान् शिवगृहाश्रमी ॥ देवाग्न्यतिथिभैक्षार्थं पचेन्नै वात्मकारणात् । आत्मार्थं यः पचेदन्नं नरकार्थं स जीवति ॥ यः शिवब्रह्मचारी स्यात् स शिवार्चाग्नितत्परः । भवेज्जितेन्द्रियः शान्तो नैष्ठिको भौतिकोऽपि वा ॥ यः सर्वसङ्गनिर्मुक्तः कन्द मूलफलाशनः । शिववैखानसो ज्ञेयः शिवार्चादिपरो भवेत् ॥ निवृत्तः सर्वसङ्गेभ्यः शिवध्यानपरः सदा । ज्ञेयः शिव यतीन्द्रोऽयं भस्मनिष्ठो जितेन्द्रियः ॥' इति । सिद्धान्त शिखामणावप्युक्तं— 'शिवोक्तधर्मनिष्ठा तु शिवाश्रमनिषे विणाम् ॥' इति । प्राकृताश्रमधर्मेण मोक्षात्मकाकृतकलोक प्राप्त्यसम्भवात् । तस्य ज्ञानसमुच्चितत्वाभावात् । 'नास्त्यकृतः कृतेन' इति वक्ष्यमाणत्वाच्च । पशुकर्मिणामत्रोक्त विरजस्त्व विरोधात् । पतिकर्मिणां तु 'भवभक्तिपरा ये तु भवप्रवणं

चेतसः । भवसंस्मरणोद्युक्ता न ते दुःखस्य भागिनः ॥' इति शिवधर्मोक्तेः, विरजस्त्वसत्वात् । श्रद्धा च–गुरूपदिष्टमन्त्रार्थोपासनायां विश्वासः । ते ये शान्ताः – शान्तियुक्ताः, भैक्ष्यचर्या – भैक्षेण भिक्षाणां समूहेनाशनेन 'भैक्षं भिक्षाकदम्बकम्' इत्यमरः । चर्या – वृत्तिं प्राणधारणम्, चरन्तः – कुर्वन्तः, परिग्रहयुक्ताश्रमिणश्च । विद्वांसः – शिवस्वरूपज्ञानिनः, अरण्ये – विविक्तदेशे, वर्तमानाः – उपवसन्ति – सेवन्ते, ते पुरुषाः विरजाः – व्यपगतरजसः, दुःखाद्युत्पादकमोक्षप्रतिबन्धका धर्मादिसाधनमलासंबद्धाः सन्तः सूर्यद्वारेण – सूर्यमण्डलभेदनद्वारा, प्रयान्ति – प्रकर्षेण पुनरावृत्तिराहित्येन, यान्ति – गच्छन्ति । तदुक्तं वातुलागमे 'लिङ्गाङ्गसंगं कुर्वन्तं दृष्ट्वा द्विजवरं रविः । स्थानाच्चलत्ययं भित्वा मण्डलं मे व्रजेच्छिवम्' इति । कुत्रेत्यत आह यत्रेति । यत्र – चिच्छक्त्यपरपर्यायपराहन्तामयदिव्य तेजोमण्डलमध्यात्मके लोके अमृतः –अविनाशी शिवः । अमृतत्वं च नान्येषां देवानां 'जातस्य मरणं ध्रुवम्' इत्यनेन ब्रह्मविष्णवादि देवानां जातत्वस्य पूर्वमुक्तत्वात् । मृतत्वस्यापि तेषां प्रसिद्धेः । परशिवस्य त्वमृतशब्दवाच्यत्वस्य श्रुतिप्रसिद्धत्वात् । कठवल्ल्युपनिषदि 'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते' श्वेताश्वतरोपनिषदि 'यद्वेदगुह्योपनिषत्सु गूढम् । तद्ब्रह्मवेद ते ब्रह्मयोनिं ये पूर्वं देवा ऋषयश्च तं

विदुः ते तन्मया अमृता वै बभूवुः' कैवल्योपनिषदि 'शिवं प्रशान्तममृतं ब्रह्मयोनिम्' इति । पुरुषः – पुरुषपद वाच्यः, 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं । तदा विद्वान् पुण्यपापे विधूय निरंजनः परमं साम्यमुपैति' इति वक्ष्यमाणवाक्यात् 'तमीशानं पुरुषं देवमीड्यं, निचाय्येमां शान्तिमत्यन्तमेति' इत्यथर्वशिरःश्रुतेः' 'तत्पुरुषाय विद्महे' इति तैत्तिरीयश्रुतेश्च । अव्ययात्मा नित्य ज्ञानक्रियादि स्वभावः सः 'यया तदक्षरमधिगम्यते' इत्य-त्रोक्तेः । अक्षरशब्दनिर्दिष्टः परशिवः अस्ति – अविनाभावेन वर्तते तत्रेत्यर्थः । 'तुर्यातीतपदं यत्तत्परं वाङ्मनसाध्वनः । अनुप्रविश्य तद्योगी न भूयो विश्वमीक्षते' इति रेणुकभगव-त्पादाचार्योक्तेः । अत्रामृतपुरुषाव्ययात्मत्वधर्मेभ्यः यत्रेति यत्पदनिर्दिष्टस्थलस्य परशिवाविनाभूतस्य मोक्षरूपस्वशक्ति परकत्वेन व्याख्यातुं शक्यत्वेऽपि तस्य हिरण्यगर्भस्थान पर कत्वेन व्याख्यानं अव्ययामृतपदसमभिव्याहृत पुरुषपदस्य हिरण्यगर्भपरत्वेन व्याख्यानं च केषांचिदसमंजसम् 'एष वः सुकृतो ब्रह्मलोकः' इत्यनेन पूर्वमेव तस्य प्राप्तत्वात् स्वर्गादि चतुर्मुखलोकप्राप्त्यादिपशुकर्मफलन्तु पूर्वमेवोक्तं 'तपः श्रद्धे' इत्यादिना तु पतिकर्मफलं मोक्षरूपपाशात्मकबीजाभावनि-वृत्तिपूर्वकस्वशक्तिविकासात्मकचिच्छक्तिविशिष्टशिवत्वप्राप्ति-रूपमुक्तम् । ब्रह्मप्रेप्सुना परापरोभयविद्याया वेदितव्यत्वेऽप्य

पर ऋग्वेदादिप्रतिपाद्यानामग्निष्टोमादीनां न ज्ञानसमुच्चितत्वम् किन्तु तदुत्तरकाण्डप्रतिपाद्यपतिकर्मणां शिवाश्रमोचितानामेव । लिङ्गाङ्गसामरस्यरूपमोक्षे निष्कामसमनुष्ठितानां तेषां पारंपर्येणोपयुक्तत्वेऽप्यस्माकं न किंचित्प्रयोजनम् । परम शिवभक्तानामित्युक्तं पूर्वम् । पाशाश्रयत्वात्तच्चोक्तं पशुकर्मेतिवै मया ' इति लिङ्गाङ्गसामरस्यापरपर्यायजीवब्रह्मैक्य लक्षणमुक्तौ पारंपर्येणोपयुक्तपशुकर्मैवात्र ' प्लवाह्येते ' इत्यादिना स्वर्गाद्यनित्यलोकफलकावरककर्मपदेनोक्तमिति स्फुटं ज्ञायमानत्वात् अमृतादिपदसमभिव्याहृतस्य यत्रेति यत्पदनिर्दिष्टपराहन्तामयचिच्छक्त्यात्मकलोकस्य पतिकर्मसाध्यस्य नित्यत्वस्य ' तपः श्रद्धे ' इत्यादिना ज्ञायमानत्वाच्च । पतिकर्मसाध्यश्च नित्यो लोकः, कर्मसाध्याश्चानित्या लोकाः वर्तन्ते । इति स्फुटीकृतमेतावता मन्त्रसन्दर्भेण ॥ ११ ॥

संसारहेयस्थलापन्नो भक्तः परविद्यार्थं श्रीगुरुमुपसर्पेत

परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो
निर्वेदमायान्नास्त्यकृतः कृतेन ।
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्
समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥ १२ ॥

इतःपरं पतिकर्मपशुकर्मसाध्यनित्यानित्यलोकपरीक्षानन्तरमनित्यफलतज्जनकपशुकर्मणि निर्विण्णस्य नित्यफ-

लक्षशिवाश्रमोचितपतिकर्माचिचीर्षोः परशिवमहालिङ्गजिज्ञासोः संसारहेयत्वलापन्नस्य सांसारिकसकलदुःखविध्वंसिनी श्रीगुरूपसत्तिर्विधीयते । 'परीक्ष्यलोकान् कर्मचितान्' इति । कर्मचितान् – कर्मभ्यां ज्ञानसमुच्चितासमुच्चिताभ्यां, चितान् – संचितान् लभ्यानित्यर्थः, लोकान् – अधोर्ध्ववर्तमानान्, तत्तत्कर्मिभिरनुभूयमानान्, परीक्ष्य – प्रत्यक्षादिप्रमाणैर्नित्यत्वानित्यत्वाभ्यां विचार्य, ब्राह्मण इत्येतत्पदमध्वशुध्यादिसंस्कारार्हवर्णोपलक्षणार्थम् । य इत्यध्याहार्थम् । स इत्युत्तरत्रश्रवणात्, यः ब्राह्मणः अध्वशोधनरूप संस्काराधिकारी निर्वेदं – अनित्येषु लोकेषु तत्साधकेषु पशुकर्मसु च वैराग्यं, आयात् – प्राप्नुयात् । कुत इत्यत्राह 'नास्त्यकृतः कृतेन' इति । अकृतः – नित्यः शिवलोकः, पराहंतामयचिच्छक्त्यात्मकः मोक्ष इत्यर्थः : कृतेन–ज्ञानसमुच्छितेन पशुकर्मणा, नास्ति–लभ्यो न भवति । किन्तु पतिकर्मणा लभ्यो भवति। पतिकर्मणा मोक्षं प्राप्नोत्यधिकारीति यावत्। न च कर्मजन्यत्वे मोक्षस्यानित्यत्वं स्यात्। यत्कृतकं तदानित्यमिति व्याप्तेः । 'तद्यथेह कर्मचितो लोकः क्षीयते । एवमेवात्र पुण्यचितो लोकः क्षीयते' इति श्रुतेश्चेति वाच्यम् 'यदिहाप्यनेवं विन्महत्पुण्यं करोति तद्धास्यांततः क्षीयते एव । आत्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते नास्य कर्म क्षीयते' इति । अना-

त्मविदा कृतस्य कर्मणः फलोपभोगान्ते क्षयस्य ब्रह्मविदा तु कृतस्य कर्मणः क्षयाभावस्य प्रतिपादनेन अनित्यत्वप्रस क्त्यभावात् । न्यायस्य श्रुतिबाधितत्वात् । न च क्रियाया आशुतरविनाशित्वस्य प्रत्यक्षसिद्धत्वात् कथमक्षयत्वप्रति पादनमिति वाच्यम् । क्रियायाः सूक्ष्मावस्थारूपस्यापूर्वस्य कर्मशब्दवाच्यस्याक्षयत्वप्रतिपादनात् । न च तस्मिन् मानाभाव इति वाच्यम् । तदपूर्वाभावे आशुतरविनाशिन्याः क्रियायाः कालान्तरे फलजनकत्वानुपपत्तेः । तदभावे 'प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम् । तस्मा ल्लोकात्पुनरैत्यस्मै लोकाय कर्मणे (बृ. ४-४-५) इति । कस्य-वा क्षये परलोकादिहागमनमुच्येत । किं च 'रमणीय चरणा रमणीयां योनिमापद्येरन्' इति (छां. ५-१०-६) वाक्ये केन वा योनिविशेष प्राप्तिरुच्येत । तस्माद्धर्माधर्मयोः शास्त्रैकगम्यत्वात् न तर्केण प्रयोजनमस्ति । 'श्रुतेस्तु शब्द-मूलत्वात्' इति ह्युक्तम् । 'नास्त्यकृतः कृतेन' इति । 'तद्यथेह कर्मचितः' इति च श्रुतिरविद्वद्विषयेति बोध्यम् । तस्मात् ज्ञानसमुच्चितपतिकर्मप्राप्यमोक्षस्य नित्यत्वं सिद्धम् । तस्मात्तद्विज्ञानार्थं तस्य नित्यस्य पतिकर्मसमुच्चितज्ञानप्राप्यस्य विशेषेणाधिगमार्थम् । सः ब्राह्मणः समित्पाणिः लिङ्ग-धारणात्मकशिवदीक्षांगभूतहोमाद्यर्थं समिदाद्युपायनहस्तः, श्रोत्रियं – श्रुतवेदान्तं ब्रह्मनिष्ठं – ब्रह्मणि शिवलिंगे धार्यत्वेन

निष्ठा यस्य तं परित्यक्तानित्यफलकपशुकर्माणं नित्यफलक लिंगधारणादिपतिकर्मनिष्ठमित्यर्थः । तदुक्तं नीलकण्ठ शिवाचार्येण 'नायमात्मेति वाक्येन शिवस्य वरणं तनोः । वरणं नाम तद्रूपधारणं विधिमार्गतः 'लिंगांगेति वाक्येन मोक्षमार्गैकतत्पराः । अमृतस्येति वाक्येन धारणं प्रतिपादितम् 'तन्निष्ठा एव मनुजा अतिवर्णाश्रमे रताः । त एव हि महात्मानो ब्रह्मनिष्ठा उदाहृता' इति गुरुमेव 'गुरुस्थल समाख्याता गुरवः सर्वलिङ्गिनाम् 'इत्युक्तप्रकारेण लोके गुरुस्थलीयत्वेन प्रसिद्धम् । आचार्यमेवात्रैवकारेण नियमविधिःसूचितः । तथा च श्रुतिः' आचार्याध्द्धेव विद्या विदिता साधिष्ठं प्रापयतीति' (छां. ४·९-२) इति । 'आचार्यवान् पुरुषो वेद' इति 'आचार्यदेवो भव' इति च 'गुरुरुपायः' इति शिवसूत्राच्च । अभिगच्छेत्-उपसंगच्छेत् 'श्रोत्रियं ब्रह्मनिष्ठं स्वगुरुं गच्छेद्यथाविधि । गुरुस्तस्मै परां विद्यां दद्याद्ब्रह्मात्मबोधिनीम् । (रुद्रहृदयोपनिषत् ३४-३५) इति श्रुतेः । उक्तं च क्रियासारे द्वादशोपदेशे 'उपगम्य गुरुं विप्रमार्यं तत्त्वार्थं वेदिनं । जापिनं सद्गुरूपेतं ध्यानयोगपरायणम्' इति । किंच तत्रैव त्रयोदशोपदेशे 'तत्रादावुपसंगम्य ब्राह्मणं वेदपारगम् । गुरुमाराधयेत्प्राज्ञं सुभगं प्रियदर्शनम् । सर्वाभयप्रदातारं करुणाक्रान्तमानसम् ॥ तोषयेत्तं प्रयत्नेन मनसा कर्मणा गिरा' इति । उक्तं च तत्रैव पञ्चविंशोपदेशे दीक्षागुरु

लक्षणम् ‘ सा दीक्षा गुरुणा कार्या स गुरुः कथ्यतेऽधुना ’ इत्यादिना ‘ दीक्षाकर्मणि कर्मठः ’ इत्यन्तेन । श्रीकरभाष्यकारैरपि ‘ नास्त्यकृतः कृतेन ’ इति वाक्येन ‘ प्राकृतस्यैव कर्मणो निषिद्धत्वात् ’ इत्युक्तम् । तस्मान्न कर्मसामान्यबोधकत्वं कृतशब्दस्य । किंतु पतिकर्मव्यतिरिक्तं पशुकर्मबोधकत्वमेव । ‘ अमृतस्य देवधारणो भूयासम् ’ ‘ तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः ’ ‘ व्रतमेतच्छाम्भवं तत्समाचरेन्मुमुक्षुर्न पुनर्भवाय ’ इति तैत्तिरीय श्वेताश्वतरादिषु शिवलिङ्गध्यानधारणाद्यप्राकृतपतिकर्मणां मोक्षहेतुत्वोपदेशात् । चिच्छक्त्यात्मकशिवलोकस्य शिवार्चनादि पतिकर्मसाध्यस्य नित्यत्वं श्रूयते भस्मजाबालोपनिषदि ‘ नान्यं मल्लोकात्परं । यमवाप्य न शोचति न स पुनरावर्तते न स पुनरावर्तते । लिंगरूपिणं मां संपूज्य चिन्तयन्ति योगिनः सिद्धाः – सिद्धिंगताः । इति शिवोक्तेः ॥ उक्तं च शिवधर्मोत्तरे – ‘ दिनकृत्कोटिसंकाशं स्थानमाश्चर्यसंयुतम् । सर्वकामसमायुक्तं विशुद्धं नित्यमक्षयम् ॥ संप्राप्य तत्पदं दिव्यं समस्तक्लेशवर्जिताः । सर्वज्ञाः सर्वगाः शुद्धाः परिपूर्णा भवन्ति च ॥ विशुद्धकार्यकरणाः परमैश्वर्य संयुताः । सदेहाश्च विदेहाश्च भवन्त्यात्मेच्छया पुनः ॥ ये संप्राप्ताः परं स्थानं यज्ञयोगरता नराः । न तेषां पुनरावृत्तिर्घोरे संसारमण्डले ॥ ’ इति । किं च ‘ स खल्वेवं वर्तयन् यावदायुषं

ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते न च पुनरावर्तते' (छां. ८-१५-१) इति श्रुत्यापि ब्रह्मलोकशब्दितमोक्षात्मक शिवलोकप्राप्तानां पुनरावृत्तिराहित्यमुच्यते । तस्मान्नकर्मसाध्यत्वं मुक्तेरिति परेषां व्याख्यानं श्रुतिविरुद्धम् । पतिकर्म सहकृतज्ञानप्राप्यशिवलोकात्मकमुक्तेः नित्यत्वं सिद्धम् ॥१२॥

तस्मै स विद्वानुपसन्नाय सम्यक्
प्रशान्तचित्ताय शमान्विताय ।
येनाक्षरं पुरुषं वेद सत्यं
प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥ १३ ॥

इति प्रथममुण्डके द्वितीयःखण्डः ॥ २ ॥
इति प्रथममुण्डकम् ॥ १ ॥

'तस्मै स विद्वान्' इति – सः – भुवनप्रसिद्धरेणुकादिपंचाचार्याणां वीरादिगोत्रजातो गुरुस्थलीयत्वेन प्रसिद्ध आचार्यः। कथं भूत इत्यत आह विद्वानिति । विद्वान् – लिङ्गाङ्गसामरस्यज्ञानवान् । उपसन्नाय—'भो कल्याणमहाभाग शिवज्ञानमहोदधे । आचार्यवर्य संप्राप्तं रक्ष मां भव रोगिणम्' इति प्रार्थनापुरस्सरं उपगताय समिदाद्युपायन पाणये शरणागताय सम्यक् – सुष्ठु, प्रशान्तचित्ताय – शुद्धचित्ताय, भूतशुध्यादिगर्भगुरुकृतस्वास्तिकारोहणादिदीक्षा-

संस्कारसंस्कृतं चित्तं प्रशान्तं – शुद्धं भवति । शमान्विताय – शमेन शुध्यात्मकेन अन्विताय – युक्ताय । मन्त्र, मन्त्रेश्वर, मन्त्रमहेश्वरापरपर्यायेष्टादिलिङ्गत्रयानुयोगिकगुरु कृतांगत्रयप्रविलापनसंपन्नः शिष्यः शुद्धात्मा भवति । गुरुकृतदीक्षात्रयनिर्दग्धमलत्रयवत्वात् । तस्मै शुद्धचित्ताय शुद्धात्मने शिष्याय । येन – यया परविद्यात्मकस्थूलसूक्ष्म पंचाक्षरमहामनुरूपं अक्षरं अद्रेश्यादिविशेषणं पुरुषं – पुरुषपदवाच्यं शिवलिङ्गम् । वेद – जानात्युक्तशिष्यस्तां परां विद्यां तत्त्वतो ब्रह्मविद्यां – वस्तुतो ब्रह्मविद्यां पंचाक्षरीं ऋग्वेदादीनां ब्रह्मविद्यात्वेऽपि न ऋग्वेदादिविद्या तत्त्वतो ब्रह्मविद्या भवितुमर्हति । तस्याः पूर्वकाण्डरूपाया अवरपशुकर्मपरत्वात् उत्तरकाण्डस्य अपरविद्यात्वस्य पूर्वमुक्तत्वात् । पंचाक्षरमहामनुरूपायाः परविद्याया एव साक्षान्मोक्षोपयोगित्वात् । तस्या एव लिंगांगसामरस्यबोधकत्वात् । पंचाक्षरी पराविद्यैव तत्त्वतो ब्रह्मविद्या । तां प्रोवाच वातुल तन्त्रादिशिवागमोक्तप्रकारेण प्रब्रूयात् । उक्तं च क्रियासारे पंचाक्षरीविद्यायाः परत्वम्– 'आश्रित्य परमां विद्यां हृद्यां पंचाक्षरीं मम ' इति । 'अस्याः परमविद्यायाः स्वरूपमधुनोच्यते ' इति । उक्तं च वीरमाहेश्वराचारसंग्रहे । 'आश्रयेत्परमां विद्यां हृद्यां पंचाक्षरीं बुधः ' इति । उक्तं चानुभव सूत्रेऽपि 'पंचाक्षरी परा विद्या सतारा तु षडक्षरी ' इति ।

'तस्य दक्षिणकर्णे तु निगूढमपि कीर्तयेत्। छन्दोरूपं ऋषिं चास्य देवतान्यासपद्धतिम् ॥' इति रेणुकभगवत्पादाचार्योक्तप्रकारेणोपदिशेद्गुरुरित्यर्थः । एतादृशपरविद्योपदेशानन्तरं मन्त्रपूतः शिष्यः गुरुपुत्र इति लोके प्रसिद्धो भवति । उक्तं च क्रियासारे तृतीयोपदेशे 'जिह्वालिङ्गान्मन्त्रशुक्रं कर्णयोनौ निषिच्य वै। जातः पुत्रो मन्त्रपूतः पितरं पूजयेद्गुरुम् ॥ निमज्जयन्ति वै पुत्रं संसारे जनकः पिता । संतारयति संसारात् गुरुर्वै बोधकः पिता । उभयोरन्तरं ज्ञात्वा पितरं संप्रपूजयेत् ॥' इत्यनन्तरं परविद्यार्थं लिङ्गाङ्गसामरस्यं बोधयेदाचार्यः। तदुक्तं क्रियासारे एकोनविंशोपदेशे 'लीनार्थगमकं लिंगमन्यदङ्गमुदीरितम् । लिंगांगयोस्सामरस्यं जीवब्रह्मैक्यलक्षणम् ॥ तदपि द्विविधं प्रोक्तं साधनेन समन्वितम् । द्वितीयं तद्विनिर्मुक्तमाद्यं गुरुकृतं पुरा ॥ द्वितीयमपि शिष्यस्य गुरुवाक्यस्य पालनात् । आद्यं वेदादिदीक्षाभ्यास्त्रिपुण्ड्रस्यापि धारणात् । रुद्राक्षधारणाच्चापि पंचाक्षरजपादपि। मुख्याल्लिङ्गधृतेश्चापि दहराकाशमण्डले ॥ बहिर्दहरदेशे च हृदये लिङ्गधारणात्। क्रमागतेन मार्गेण कृतांगन्यासवान् गुरुः ॥ सकलीकृत्य देहं स्वं प्रविलापनपुरःसरम्। तत्तद्बीजाक्षरं न्यस्य तत्तस्थानेऽपि बुद्धिमान् । अङ्गतत्वानि यान्याहु लिंगतत्वानि यानि च ॥ सामरस्यं तयोर्ज्ञात्वा शास्त्रोक्तेनैव वर्त्मना । पंचाक्षरार्थतश्चेममर्थं शिष्यस्य बोधयेत् ॥ नमः

शब्देनांगतत्त्वं लिंगतत्त्वं शिवेति च । आयेत्यैक्यार्थबोधस्यादिति मन्त्रार्थबोधकः' इति । गुरुश्च लिंगांगसामरस्यापरपर्यायलिंगांगैक्यबोधकप्रमाणसहितपंचाक्षरमन्त्ररूपां षट्स्थलब्रह्मविद्यां परां प्रणवसहितपंचाक्षरीं कया रीत्या बोधयेदित्यादि नियमोऽप्याचार्यस्य प्रोवाचेत्यनेनोक्तः । स नियमश्च क्रियासारादिवीरशैवीयशास्त्रे प्रसिद्धः । तथा हि क्रियासारे त्रयोदशोपदेशे 'गुरुश्च स्वाश्रयं शिष्यं वर्षमेकं परीक्षयेत् ।' इत्यादिना 'तेषामध्वविशुध्यादि कुर्यान्मातृकुलोचितम्' इत्यन्तेनोक्तः । किं च तत्रैव 'तस्माल्लिंगानि संवीक्ष्य शक्तिपातस्य भूरिशः । ज्ञानेन क्रियया वाथ गुरुः शिष्यं परीक्षयेत् । योऽन्यथा कुरुते मोहात्स विनश्यति दुर्मतिः ।' इत्यादि नियमोप्युक्तः । तस्मात् तत्त्वमस्यादि महावाक्यार्थलिंगांगसामरस्यबोधिकां परां विद्यां प्राप्य तत्तदनुकूलश्रुतिस्मृत्यादिश्रवणमनननिदिध्यासन विध्वस्तसंशयादिः शिष्यः तदर्थज्ञानदार्ढ्यें मुक्तो भवति । तदुक्तं क्रियासारे त्रयोदशोपदेशे 'पंचाक्षरप्रभावेन सर्वेकामाः समाहिताः । सत्यं सत्यं पुनः सत्यं सर्वसञ्जीवनौषधम् ॥ पंचाक्षरामृतं पीत्वा शिवसायुज्यमाप्नुयात् । नावर्तते पुनर्मर्त्यः पुनर्नावर्तते ध्रुवम्' इति । पूर्वोक्तक्रमेण प्रणवस्यापि सूक्ष्मपंचाक्षरात्मकत्वात् निर्गुणब्रह्मप्रतिपादकत्वान्नकारादियकारान्तस्य स्थूलात्मकत्वात् सगुणाचारादिपंच-

ब्रह्मप्रतिपादकत्वात् सगुणनिर्गुणयोरभिन्नत्वेनोपासनाया वीरशैवाचार्यानुमतत्वात् । 'सिद्धान्तस्तु नीरूपस्यैवाकार-विशेषवतः साधकानुग्रहार्थं स्वीकर्तव्यत्वेन आरूढप्राप्यस्य निर्गुणस्योपासनानर्हत्वेनारुरुक्षुतावस्थायां सगुणोपासनस्य विधानात् । सगुणनिर्गुणोभयसाधारण्येन संसारदावानल-परितप्तानां पाशविच्छेदार्थं षडक्षर्यास्तारकत्ववर्णनात् । सगुणेऽन्यन्निर्गुणेन्यदिति वैयधिकरण्येन तारकत्वानौचि-त्यात् । निर्गुणोपासनायामशक्तोऽपि सगुणोपासनावसरे नित्यप्राप्तायाः प्रणवविशिष्टपंचाक्षर्या एव वाचकत्वेन सगुण-ब्रह्मानुशील्योपासनां कुर्यात् । यत्तु सगुणोपासनायां पंचा-क्षर्याः षडक्षर्या एव वाच्यवाचकयोरभेदोपासना । निर्गुणो-पासनायां तु प्रणवमात्रस्य वाच्यवाचकयोः अभेदो-पासनेति तदविचारितरमणीयम् । सगुणनिर्गुणयोर्भेदाभा-वात् । साधकानुग्रहार्थमाविर्भूतशक्तेः परमेश्वरस्योभयत्र साधारण्येन षडक्षर्यास्तारत्वमिति महालिंगस्य परब्रह्मण एवोपासनं युक्तम्' इति नीलकण्ठशिवाचार्योक्तत्वात् । प्रणवसहितपंचाक्षरमन्त्रातिरिक्तमन्त्राणां मुक्तिसाधनत्वेनान-भ्युपगमात् । क्रियासारे एकोनविंशोपदेशे—'पंचाक्ष-रेतरमन्त्राणामनेकेषां साधनत्वप्रतिषेधात् पंचाक्षरस्यैव वीरशैवानां मुक्तिसाधनत्वं नान्येषामिति । 'नीलकण्ठ-शिवाचार्यैः कण्ठतः स्पष्टमुपदिष्टत्वात् । अस्यैव महामनोः

सप्तकोटिमन्त्रोत्पत्तिस्थानत्वात्। लिंगांगसामरस्यात्मकषट्स्थल ब्रह्मोपदेशे विनियुक्तत्वात्। 'पंचाक्षरार्थतश्चेममर्थं शिष्यस्य बोधयेत्।' इत्युक्तत्वात् अस्यैव श्रौतप्रकरणपठितत्वात्। अष्टावरणघटकत्वेन श्रीकरभाष्यकारादिभिरप्यादृतत्वाच्च। एतन्मन्त्रातिरिक्तमन्त्रस्य वीरशैवैकदेशे मुक्तिसाधनत्वेनानुमतत्वे तस्याष्टावरणबाह्यत्वात् वीरशैवानादरणीयत्वमेव स्यात्। सानन्दयोगीन्द्रो महामनोरुच्चारमात्रेणाष्टाविंशतिनायकनरकस्थितपापिजनानुद्धृतवानिति सानन्दचरितस्य पुराणप्रसिद्धेः। सानन्दशतानन्दोपमन्युवसिष्ठवामदेवादिमुनयोऽप्यनेनैव महामनुना संसिद्धमहातेजस्विनो भूत्वान्ते मोक्षलक्ष्मीमपि प्राप्नुवन्ति इति सुप्रसिद्धः। ये केचिद्वीरशैवाः गुरूपदिष्टमहामनुं त्यक्त्वा मन्त्रान्तरं जपन्ति तदर्थं चानुसंदधते तेषां वीरशैवत्वभंगः स्यात्। स्याच्चाष्टावरणभंगस्तद्भंगे च कथं वा तेषां लिंगपूजाधिकारस्तदभावे कथं वा लिङ्गांगसामरस्यात्मकः शिवयोगस्तदभावे कथं वा तेषां मोक्षाधिकारस्तस्मात्सर्वेऽपि शिवाश्रमिणो वीरशैवाः दीक्षाकाले ब्रह्मविद्गुरूपदिष्टप्रणवविशिष्टपंचाक्षरमन्त्रार्थमनुसंदधानास्तदुपदेशकं गुरुं च श्रद्धधाना मुक्ताभवेयुरित्यस्माकमाशयः। न चाश्रमवैलक्षण्यादष्टावरणवैलक्षण्यं स्वीकर्तुं शक्यम्। आवरणानां द्वात्रिंशत्त्वापत्तेः। पूर्वाश्रमत्रये आवरणवैलक्षण्याभावे चतुर्थाश्रमेऽष्टावरणवैलक्षण्यमितियत् तत्तुच्छम्। विनि-

गमनानिरहात् । पूर्वाश्रमत्रयनिष्ठावरणानामपि मोक्षफलकत्वात् । सर्वेषां शिवाश्रमिणां मोक्षाधिकारात् । तस्मात् भस्मजाबालाद्युपनिषदुपदिष्ट तारकत्वब्रह्मविद्यात्वविशिष्टपरविद्यात्मकमहामनुबोधकदीक्षाशिक्षाज्ञानगुरुरेव त्रिविधवीरशैवैर्वन्द्यः – पूज्यः, कैवल्यप्रापकश्च तेषाम् । 'स्वगुरुं गच्छेद्यथाविधि' । 'भक्त्या स्वगुरुं प्रणम्य' इत्यादि रुद्रहृदयोपनिषत् कैवल्योपनिषदाद्युक्तप्रकारेण अत्याश्रमशाब्दितशिवाश्रमविशिष्टाः सर्वे वीरशैवाः स्वस्वगुरूपसदनं कृत्वा तदनुभवभोगरसिका भवेयुः ॥ १२ ॥

इति प्रथममुण्डके द्वितीयखण्ड वीरशैवभाष्यम् ।
हरगुरुचरचरणार्पितं भूयात् ॥

---

## अथ द्वितीयमुण्डके प्रथमःखण्डः ।

तदेतत्सत्यम् । यथा सुदीप्तात्पावकात्
विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः ।
तथाक्षराद्विविधाः सौम्यभावाः
प्रजायन्ते तत्र चैवापि यन्ति ॥ १ ॥

प्रथममुण्डके पशुकर्मपतिकर्मसाध्ययोरनित्यानित्यलोकयोः प्राप्तिफलमुक्त्वा परविद्याख्यमहामन्त्रार्थं लिंगांगसामरस्यं बोधयितुं द्वितीयमुण्डकमारभ्यते । तत्रादौ तद्घटकलिंगांगस्वरूपज्ञानमन्तरा तत्सामरस्यज्ञानाभावात् दृष्टान्तद्वारा तत्स्वरूपं प्रदर्श्य तत्सामरस्यं प्रदर्शयत्ययं मन्त्रः । तदेतत्सत्यम्–'यथा सुदीप्तात्पावकात्' इति । यथा–येन प्रकारेण सुदीप्तात् काष्ठयोगेन सुष्टु प्रज्वलितात् पावकाद्वह्नेः, सहस्रशः–अनेके, विस्फुलिंगाः – कणाः, कथं भूता इत्यतआह–'सरूपाः' इति सदृशरूपाः प्रभवन्ते – निर्गच्छन्ति । साधारणासाधारणधर्माभ्यां भिन्नाभिन्ना इत्यर्थः । यद्यग्नेर्विस्फुलिंगयोरत्यन्तमेव भेदस्तदा विस्फुलिंगेन दह्यमानेऽपि तूलादावाग्निर्दहतीत्यभेदप्रतीत्यनुपपत्तिः स्यात् । स्याच्चाग्निभिन्नजलादाविव तूलादिदाहकत्वोष्णत्वप्रकाशकत्वाद्यभावोऽपि विस्फुलिङ्गे । यद्यत्यन्तमभेदस्तदा 'अग्नेर्विस्फुलिंगाः' इति भेदप्रतीत्यनुपपत्तिः स्यात् । स्याच्चाग्नाविव विस्फुलिंगेप्यार्द्रकाष्ठदाहकत्वशीतनिवर्तकत्व पाकसाधनत्वादि धर्मवत्वम् । तस्मादंशांशिनोर्भेदाभेदयोःपारमार्थिकत्वमेवाभिव्यक्तं 'सरूपाः' इति विशेषणेन । तथा सौम्य – हे प्रियदर्शन, अक्षरात् – चिच्छक्तिविशिष्टात् परशिवब्रह्मणः, स्वेच्छाशक्तिवशाद्विभक्ताः विविधा नानाविधाः भावा – शिवांशा अनाद्यविद्यासंबन्धाः जीवनामकाः सन्तः प्रजायन्ते । स्वात्मनि

चिच्छक्तौ कुसूलधान्यवद्वर्तमाना अंशा विभक्ता मायाक्रान्ता जीवनामकाः निर्गच्छन्तीत्यर्थः । 'अनाद्यविद्यासंबन्धात्तदंशो जीवनामकः' इति रेणुकभगवत्पादाचार्योक्तेः । न तु घटादि वदुत्पद्यन्ते 'न जीवो म्रियेत' (छां. ६-११-३) इति । 'ज्ञाज्ञौ द्वावजावीशनीशौ' (श्वे. १-८) इति च श्रुतेः' । जीवानामजत्वात् । तत्र चैव तस्मिन्नेवाक्षरे परशिवब्रह्मणि लिंगे नद्योऽब्धाविवापियन्ति – विलीयन्ते । तदेतत्सत्यम् – नत्वसत्यमित्यर्थः । परविद्यार्थं सामरस्यानुसन्धानाभ्यासदार्ढ्यसमुदितशिवत्वाभिव्यक्तिभाजो भवन्ति । 'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' (मुण्ड. ३-२-७) इत्यग्रे वक्ष्यमाणत्वात् । यथा विस्फुलिंगाग्न्योरंशांशिभावेन भेदाभेदयोः पारमार्थिकत्वं तथा लिंगांगशब्दितशिवजीवयोरंशांशिभावेन भेदाभेदयोः पारमार्थिकत्वमिति भावः । मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ।' इति (श्वे.४-९) 'पादोऽस्य विश्वाभूतानि, त्रिपादस्यामृतं दिवि' इति च श्रुत्यन्तरात् परशिवब्रह्मांशा एव जीवाः पुरुषाः । अंशवाचकत्वात् पादशब्दस्य । 'अंशो नाना व्यपदेशात्, इति सूत्राच्च । 'जीवब्रह्म स्वरूपैक्यं न क्वचित्सूत्रितं पुनः । अंशो नानेति सूत्रे तु जीवस्य ब्रह्मणोंशता ॥ भिन्नाभिन्नत्वमग्नेस्तु विस्फुलिंगवदी

रितम्। न ह्यग्नेर्विस्फुलिंगस्य स्वरूपैक्यं प्रदर्श्यते। 'जीवस्य ब्रह्मणो येन स्वरूपैक्यं पुनर्भवेत्' इति नीलकण्ठशिवाचार्योक्तेः। 'विश्वाभूतानि' इति बहुवचनं जीवानां बहुत्वात्। मन्त्रे सूत्रेचैकवचनं जात्यभिप्रायम्। एवमन्यत्रापि बोध्यम्। 'सत्यज्ञानात्मकोऽनन्तो विभुरात्मा महेश्वरः। तस्यैवांशो जीवलोको हृदये प्राणिनां स्थितः। विस्फुलिङ्गा यथा वह्नेर्जायन्ते काष्ठयोगतः। अनादिवासनायुक्ताः क्षेत्रज्ञा इति ते स्मृताः' इति शिवगीतायां 'शिवांशा ब्रह्मविष्ण्वाद्या अंशी देवः शिवः स्मृतः' इति। 'अमृतस्य लिङ्गस्य पुत्राः लिङ्गांशभूताः' 'विस्फुलिङ्गसमूहरूपदावाग्निज्वालावदनेक कोट्यन्तरजीवशब्दितांशरूपत्वेन आविर्भूतशक्तेरपगतकोरकभावात् कुसुमादेव गन्धोपलब्धेर्वायुसम्पर्काद्विस्तृतावयवात् पुष्पगन्धवदंशाः निस्सरन्ति, तद्वत्। इति क्रियासारे नीलकण्ठशिवाचार्योक्तेः। 'अग्नेर्विस्फुलिङ्गानिव स्वतादात्म्यापन्नात् चित्कणान् सृजत्यवति, संहरति, तिरयते, अनुगृह्णाति' इति मरितोण्टदार्योक्तेः। एतेन जीवैकत्वब्रह्मत्व जीवालीकत्व जीवप्रतिबिम्बादिकत्ववादो निरस्तः। अत्र दृष्टान्तदार्ष्टान्तिकयोः 'सहस्रशः' 'सरूपाः' 'विस्फुलिङ्गाः' 'विविधा भावाः' इति बहुवचननिर्देशात्। तथा 'नित्यो नित्यानां चेतनश्चेतनानाम्। एको बहूनां यो विदधाति कामान्॥' इति श्रुत्यन्तरे जीवबहुत्वप्रतिपादनाच्च, न

जीवैकत्वं संभवति । शिवजीवयोरत्राग्निविस्फुलिंगसादृश्य प्रतिपादनान्नजीवालीकत्वं संभवत्यन्यथा विस्फुलिंगानां मिथ्यात्वापत्तेः । न ह्यंशिनः सत्यत्वमंशस्य मिथ्यात्वं केनचिदभ्युपगम्यते । न हि जीव एव सर्वदा परब्रह्म भवितुमर्हत्यत्रांशांशिभावप्रतिपादनादंशांशिनोर्भेदस्यापि सत्वात् 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ॥' इति वक्ष्यमाणमन्त्रे तयोर्भेदस्यापि स्फुटं प्रतीयमानत्वात् । न हि जीवो ब्रह्मणः प्रतिबिम्बो भवत्यत्र जीवब्रह्मणोरंशांशिभावनिर्देशात् । न हि बिम्बप्रतिबिम्बयोः सत्यासत्ययोः अंशांशिभावः संगच्छते । नह्येकत्र तयोः स्थितिः संभवति । 'गुहां प्रविष्टौ परमे परार्धे', 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इति श्रुतिसूत्राभ्यां तयोरेकत्र स्थितेरभ्युपगमात् । न ह्येकस्यैव ब्रह्मणो देहाद्युपाधिनिमित्तौ प्रभवाप्ययौ वक्तुं शक्येते । अत्राग्निविस्फुलिंगसादृश्येन जीवानां वस्तुतो बहिर्निर्गमनस्यैवोक्तत्वात् । किंचैकस्यैव देहाद्युपाधिमात्रेण । न हि 'एष ह्येव साधु कर्म कारयति' इत्यादि श्रुतिविधीयमानप्रेर्यप्रेरकभावादिः संभवति । नह्येकस्यैव देवदत्तस्य गृहाद्युपाधिमात्रेण प्रेर्यप्रेरकभावनियम्यनियामकभावादिः सिद्ध्यति । 'नह्येकस्माद्देवदत्ताद्गृहाद्युपाधिमात्रेण स्वस्य भयादिकं दृष्टं लोके ।

श्रूयते च भयं वाय्वादीनां 'भीषास्माद्वातः पवते भीषोदेति सूर्यः' इति। न चोक्तदृष्टान्तेन जीवब्रह्मणोर्भेदो न सिद्ध्यति। विभक्तदेशावच्छिन्नत्वेन विस्फुलिंगेष्ववयवत्वव्यवहारेऽपि स्वतः पुनरग्न्यात्मत्वमेवोष्णप्रकाशत्वाविशेषादिति वाच्यम्। उष्णप्रकाशत्वाविशेषेऽप्यसाधारणधर्मविशेषात्। विस्फुलिंगनिष्ठविस्फुलिंगत्वपाकासाधनत्वार्द्रकाष्ठादाहकत्वादिविशेषाद्भेदः सिद्ध्यत्यन्यथा किंचिज्ज्ञत्वादयोऽपि ब्रह्मणि संभवेयुः। तस्मादंशांशिनोर्जीवब्रह्मणोर्भेदाभेदयोः पारमार्थिकत्वमत्र विहितम्। न च निरवयवस्य ब्रह्मणो मुख्यांशः जीवो भवति। येनांशांशिभावेन भेदाभेदयोः पारमार्थिकत्वं सिद्ध्येदिति वाच्यम्। प्राकृतावयवाभावेऽपि अप्राकृतावयवसद्भावात्। तस्य शक्तेरघटितघटनापटीयस्त्वात्। 'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः', 'स्थिरेभिरङ्गैः पुरुरूप उग्रः', 'सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः। अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य॥' इत्यादि निगमागमेषु तस्य नित्यांगसद्भावस्य वर्णनात्। ननु जीवस्येश्वरांशत्वाभ्युपगमे तदीयसंसारदुःखेनेश्वरस्यापि दुःखित्वं स्यात्। यथा हस्तपादाद्यवयवगतदुःखेनांशिनो देवदत्तस्य दुःखित्वमिति चेन्न। शुद्धशिवांशात्मनः स्थूलादिमलावृतत्वेऽप्यंशिनः शिवस्य तदभावात्। दुःखादेर्मलकार्यत्वान्नेश्वरस्य दुःखित्वम्।

'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ।' इत्यत्रैव वक्ष्यमाणत्वात् । किं च । न हि वयं मलत्रयावृतस्य जीवस्य शिवांशभावेनाभेदं प्रतिपादयामः । किंतु दीक्षा-त्रयविगलितमलत्रयस्य शुद्धस्यात्मनः शिवांशभावेनाभेदं प्रतिपादयामः । तदुक्तमनुभवसूत्रे— 'आत्मायं केवलः शुद्धः शिवस्यांशः सदामलः । नित्यो निरंजनश्शान्तस्तस्मा-दात्मा स्वयं शिवः' इति । अयमेव शुद्धात्मांगशब्देन व्यवह्रियते । सिद्धान्तशास्त्रे 'अं शिवं गच्छति' इति निर्वचनात् । 'चिद्वत्तच्छक्तिसंकोचान्मलावृतः संसारी' इति शक्तिसूत्रस्थितेः । 'प्रकाशादिवन्नैवं परः' इति ब्रह्मसूत्रस्थितेश्च । न जीवसंसारदुःखेनेश्वरस्य दुःखित्वम् । अंशात्मनाऽपि शुद्धस्यामलत्वेन सांसारिकप्राकृतगुणाभावे किमु वक्तव्यमंशिनः परमशुद्धस्य पराशिवब्रह्मणस्तदभाव इति । परमते जीवानां कल्पितत्वेन नाक्षरब्रह्मसादृश्यमपरमते जीवानां घटादिवज्जन्यत्वेन नाक्षरसादृश्यं तस्मात्परापर-व्याख्यानं एतन्मन्त्रतात्पर्यैर्विरुद्धमेवेति सुधीभिरवलोक-नीयम् ॥ १ ॥

संक्षेपेणोक्तपरविद्याघटकमक्षरशब्दवाच्यं परशिव-ब्रह्मस्वरूपमेव विशदयति ।

मूलम् —

दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः ।
अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥ २ ॥

'दिव्यः' इति हि यस्मात् दिव्यः, दिवि स्वतन्त्रस्वप्रकाशताशक्तौ तिष्ठतीति दिव्यः । 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्' (श्वे. ३. ८.) इति श्रुतेः । स्वशक्तिस्वस्थतादशायामस्मि, प्रकाशे, नन्दामि इति स्वस्वरूपानुभवशक्तिविशिष्ट इत्यर्थः । अन्यथा जडत्वापत्तिर्दुर्वारा स्यात् । अमूर्तः – अपरिच्छिन्नपरिमाणवान् । पुरुषः – पुरुषपदवाच्यः । सः बाह्याभ्यन्तरः – यद्बाह्यं स्थूलमाभ्यन्तरं च शरीरं तेन सहाविनाभावेन संबन्धेन वर्तमानः । भक्तानुग्रहार्थं घृतकाठिन्यन्यायेन विराडाद्यपरपर्यायेष्टादिलिङ्गरूपेण परिच्छिन्नपरिमाणवानपीत्यर्थः । 'अणोरणीयान्महतो महीयान्' इति । 'द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च' (बृ. २. ३. १.) इति च श्रुतेः । 'उपासनार्थमन्तस्थं परिच्छिन्नं स्वमायया' इति रेणुकभगवत्पादाचार्योक्तेश्च । अजः जन्मरहितः । अजपदेन 'जायते, ऽस्ति, वर्धते, विपरिणमते, ऽपक्षीयते, नश्यति' इति यास्कोक्तानां सर्वभावविकाराणां जनिमूलत्वात् तन्निषेधेन सर्वे भावविकारा निषेधिता भवन्ति । अप्राणो हि प्राणशून्य एव । अमनाः–संकल्पविकल्पात्मकमनःशून्यः । अत एव

शुभ्रः – सदा निर्मलः । न कदाप्यात्मनोऽशस्येव मलावृतत्वमस्येत्यर्थः । परतः – परस्मात्, स्वविलक्षणजडरूपचित्तापरपर्यायप्रधानाविद्यामायाशब्दितकार्यापेक्षया परं चिच्छक्त्याख्यमक्षरं विद्याप्रज्ञादिशब्दितमुपादानकारणत्वात् । तस्मादक्षरादपि परः शिवस्तदधिष्ठानत्वात् । ततो न कोऽपि पर इत्यर्थः । 'तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् । पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम् ॥ (श्वे. ६. ६.)' इति । 'क्षरन्त्वविद्याह्यमृतं तु विद्या विद्याविद्ये ईशते यस्तु सोऽन्यः ॥' न तु अचेतनजडस्वभावप्रधानमायादेरक्षरत्वं संभवति । किन्त्वजडपरशिवस्वभावरूपाया एव प्रज्ञाशक्तेरक्षरत्वम् । 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति (श्वे. ६. ७), 'प्रज्ञा च तस्मात्प्रसृता पुराणी' (श्वे. ४. १७) इति श्रुतेश्च । न भ्रमितव्यं हरस्यैवाक्षरत्वममृतत्वमुक्तम् । 'अमृताक्षरं हरः' इति श्रुत्यन्तरे, न तु त्वदभिमतचिच्छक्ताविति । हरस्वभावात् । चिच्छक्तेः तस्याप्यक्षरत्वात् । अत एवोक्तं 'क्षरं त्वविद्या ह्यमृतं तु विद्या' इति विद्याशब्दितचिच्छक्तेरक्षरत्वम् । तत्परत्वं च 'विद्या विद्ये ईशते यस्तु सोऽन्यः' इत्यनेनोक्तम् । तस्मादत्रापि परस्मादक्षराच्चिच्छक्तिरूपादपि परत्वम् । परशिवस्य निष्प्रत्यूहम् । परमते चिच्छक्तिस्वरूपमात्रस्य

ब्रह्मत्वमस्मन्मते तद्विशिष्टस्य ब्रह्मत्वमिति विशेषः । तदुक्तं केनोपनिषच्छङ्करभाष्ये 'चिच्छक्तिस्वरूपमात्रः प्रत्ययैरेव प्रत्ययेष्ववशिष्टतया लक्ष्यते । 'नान्यद्द्वारमात्मनो विज्ञानाय' इति । 'यथा चन्द्रे स्थिरा ज्योत्स्ना विश्ववस्तुप्रकाशिनी । तथा शक्तिर्विमर्शात्मप्रकाशे ब्रह्मणि स्थिरा ॥' इति । 'स्वाभाविकी च तन्मूला प्रभा भानोरिवामला ।' इति च सिद्धान्तशिखामणि कूर्मपुराणादिषूक्तत्वात् । चिच्छक्तिविशिष्टं ब्रह्मेति निर्णीयते । अत एवोक्तं शिवाधिक्यरत्नावलिकारैरपि— "भाष्ये शङ्करनिर्मिते निगदिता ब्रह्मेति चिद्या परा सा शक्तिर्भवति प्रभोर्मुररिपुर्ब्रह्मेति निर्धारितम् । श्रीभाष्ये स च शक्तिरंगजरिपोः । श्रीकण्ठभाष्ये परब्रह्मत्वं परशक्तिमत्त्वमुदितं त्र्यय्यन्तसूत्रादिभिः ॥" इति ॥ २ ॥

'ऊर्ध्वाय नमः, ऊर्ध्वलिंगाय नमः' इति श्रुतिप्रतिपाद्यं षष्ठं प्रणवमयचिच्छक्तिविशिष्टं शुद्धात्माभिन्नमहालिंगमुक्तमिदानीं पंचाक्षरमय शान्त्यतीताद्यपरपर्यायपरादिपंचशक्तिविशिष्टं लिङ्गपंचकं साङ्गोपाङ्गस्थलपंचकं चाह— 'एतस्मा' इति ।

मूलम्—

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥३॥

अत्र क्रमानुकूलो न पाठक्रमः । 'गताः कलाः पंचदश प्रतिष्ठाः ।' (मुं. ३. २. ६) इतिं वक्ष्यमाणमन्त्रेण प्राणादीनां भौतिकत्वावगमात् । भूतोत्पत्यनन्तरं प्राणादीना-मुत्पत्तिर्वक्तव्या । तथा हि । एतस्मात् – य मयपरा-शक्तिविशिष्ट प्रसादलिंगापरपर्यायेशानब्रह्मरूपादुक्तादक्षरात् प्रणवमयाच्चिच्छक्तिविशिष्टात् खं सदाशिवापरपर्यायशरणाङ्गम् चिद्व्यापनशक्तिविशिष्टमाकाशं शब्दैकगुणकं जायते – निर्ग-च्छति । 'ईशानादाकाशम्' इति श्रुतेः । एतस्मात् – व मयादिशक्तिविशिष्टचरलिंगापरपर्यायतत्पुरुषब्रह्मरूपाद्वायुः चित्स्पन्दनशक्तिविशिष्टप्राणलिङ्ग्यभिधानेश्वराङ्गं स्पर्शैकगुणकं जायते–आविर्भवति। 'तत्पुरुषाद्वायुः' इति श्रुतेः । एतस्मात् शि मयेच्छाशक्तिविशिष्टशिवलिंगापरपर्यायाघोरब्रह्मरूपात् ज्योतिः - चिदुज्वलनशक्तिविशिष्टप्रसादाभिधं रुद्राङ्गं तेजः रूपैकगुणकं जायते । 'अघोराद्वह्निः' इति श्रुतेः । एतस्मात् – म मयज्ञानशक्तिविशिष्टगुरुलिंगाभिधानवामदेवब्रह्मरूपात् आपः– चिदाप्यायनशक्तिविशिष्टमहेशाभिधविष्णवङ्गं जलं रसै-कगुणकं जायते । 'वामदेवादुदकं' इति श्रुतेः । एतस्मात् – न मयक्रियाशक्तिविशिष्टाचारलिंगाभिधानसद्योजातब्रह्मरूपात् विश्वस्य – जगतः धारिणी चिद्धृतिशक्तिविशिष्टात् पृथिवी भक्ताभिधब्रह्माङ्गं गन्धैकगुणकं जायते । 'सद्योजातात् पृथिवी' इति श्रुतेः । 'पंचाक्षरं पंचभूतजनकं पंचकलामयं

व्यापश्यते ।' (त्रिपुरतापिनी १.) इति च श्रुतेः । अत्र 'विश्वस्य धारिणी' इति धारणशक्तिबोधकविशेषणपदमितरभूतशक्त्युपलक्षणमिति मन्तव्यम् । 'आकाश आत्मा' (तै. १. ७. १.) इत्यादि श्रुतेः। ब्रह्मणः सकाशादाकाशादेस्तदभिमानिसदाशिवादेरुत्पत्तेरवगमात्। 'य आत्मानमन्तरो यमयति' इत्यादिश्रुतेः तन्नियम्यत्वावगमाच्च । किं च अथर्वशिखायां 'ध्यायीतेशानं प्रध्यायितव्यम् । सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते । सर्वाणि चेन्द्रियाणि सह भूतैर्न कारणं कारणानां ध्याता कारणं तु ध्येयः सर्वैश्वर्यसम्पन्नः सर्वेश्वरः शम्भुराकाशमध्ये' (अथर्वशिखा ३) इति चतुर्मुखादीनां भूतैः सहोत्पत्तिश्रवणात् कारणब्रह्मणां तदभावश्रवणाच्च । एतस्मात्- क्रियाशक्तिप्रधान परशिवब्रह्मणः प्राणः- शरीरान्तःसंचारी पंचवृत्त्यात्मकवायुः क्रियाशक्तिप्रधानः । एतस्मात् - इच्छाशक्तिप्रधानात् परशिवब्रह्मणः मनः - संकल्पविकल्पादि लक्षणमन्तःकरणमिच्छाशक्तिप्रधानं जायते । एतस्मात् - ज्ञानशक्तिक्रियाशक्तिप्रधानात्परशिवब्रह्मणः सर्वेन्द्रियाणि - ज्ञानशक्तिप्रधानानि ज्ञानेन्द्रियाणि, क्रियाशक्तिप्रधानानि कर्मेन्द्रियाणि च जायन्ते। परशिवब्रह्ममहालिंगमेकमेवोपास्योपासकलीलयांगलिंगपंचकरूपेणांगपंचकरूपेण चावभासते। श्रूयते च नारायणोपनिषदि 'स वा एष पुरुषः पंचधा पंचात्मा येन सर्वमिदं प्रोतम् ।'

(नारा. ७९) इति । स एवैष पूर्वोक्तं कारणरूपं पुरि चिच्छक्तिवपुषि शयनात्पुरुषसंज्ञकं महालिंगं ईशानादि-पंचकारणब्रह्मरूपेण पंचधा भवति । किं च कार्यरूपसदा-शिवादि पंचांगस्थलरूपेण पंचात्मा भवति । पंच आत्मानो अंगानि यस्य । ईशानादिपंचलिंगरूपस्य सा पंचात्मेत्यर्थः । 'शिव एव स्वयं लिंगमात्मैवांगस्थलं भवेत्' इत्यनुभव-सूत्रोक्तेः । उक्तं च सूतसंहितायां ज्ञानयोगखण्डे– 'एक एव शिवः साक्षात् सत्यज्ञानादिलक्षणः । विकाररहितः शुद्धः स्वशक्त्या पंचधा स्थितः ॥' इति । उक्तं च योगशिखोप-निषदि, 'एकस्तम्भे नवद्वारे त्रिस्थूणे पंचदैवते । ईदृशे तु शरीरे तु मतिमान्नोपलक्षयेत् ॥' (योगशिखा ७२) इति । उक्तं च सूतसंहितायां– 'कार्यं ब्रह्मा महीभागे कार्यं विष्णु-र्जलांशके । वह्निभागे तथा रुद्रो वाय्वंशे चेश्वरः स्थितः ॥ आकाशांशे शरीरे तु साक्षादेव सदाशिवः' इति । ब्रह्मा हरिश्च रुद्रश्च ईश्वरश्च सदाशिवाः ।' इत्यनुभव-सूत्रेऽपि सदाशिवादीनामंगत्वोपदेशात् । उक्तं च श्वेताश्व-तरोपनिषदि– 'मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम् । तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥' (श्वे. ४. ९.) 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः, आकाशाद्वायुर्वायोरग्निरग्नेराप अद्भ्यः पृथिवी' (तै. ब्रह्म-वल्ली १.) इत्यत्र स्वातन्त्र्येणैव वियदाद्यभिमानि सदाशिवा-

दिदेवतानां स्वस्वोत्तरभूतजनकत्वस्य श्रूयमाणत्वात् कथं तेषामीशानादि ब्रह्मजन्यत्वमिति चेदुच्यते । न हीदं वाक्यं भूत भूताभिमानिदेवतानां स्वोत्तरभूतभौतिकोत्पादने स्वातन्त्र्यं विधत्ते। किन्तु तदधिष्ठातुः परमेश्वरस्यैवेशानादिरूपस्य 'यः पृथिव्यां तिष्ठन्' इत्यादि श्रुतेः । पृथिव्यां – तदभिमानिदेवतायामिति बोद्धयम् । आकाशादेः जडत्वात् । जीवात्मरूपतदभिमानिदेवतानां तत्परशिवनियम्यत्वात् । तदुक्तं भगवता बादरायणेन, 'तदभिध्यानादेव तु तल्लिंगात्सः' (अ. २. पा. ३. सू. १३.) इति । तथा च 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इति श्रुतेः अयमर्थः । चिच्छक्तिविशिष्टोर्ध्वलिंगात्मनः ईशानरूपाद्ब्रह्मणः आकाशः आकाशांगसदाशिवः संभूतः आविर्भूतः । आकाशात् – आकाशांगसदाशिवानुप्रविष्टात् तत्पुरुषब्रह्मणः वायुः, वाय्वंगेश्वरः संभूतः । वायोः – वाय्वंगेश्वरानुप्रविष्टात् अघोरब्रह्मणः अग्निः - अग्न्यंगरुद्रः संभूतः । अग्नेः – अग्न्यंगरुद्रानुप्रविष्टात् वामदेवाख्यब्रह्मण आपः – जलांगविष्णुः संभूतः । अद्भ्यः – जलांगविष्णवनुप्रविष्टात्सद्योजातब्रह्मणः पृथिवी – भूम्यंगचतुर्मुखः संभूतः, इति । तदुक्तं शैवे, 'महेश्वरान्महाशक्तेश्चेशानाख्यः खगात्मकः । संभूतः पुरुषस्तस्मात्पवनाख्यो महाबलः ॥ तस्मादघोरः संभूतः ज्वलनः सर्वभक्षकः । जलात्मको वामदेवस्तस्माज्जातः कृपा-

निधिः ॥ तस्माद्भूम्यात्मकः सद्योजातमूर्तिः शुभप्रदः ' इति । सर्वान्तर्यामिरूपेण सर्वचराचरविश्वोत्पादनसामर्थ्यं परशिवब्रह्मणः सर्वाधिष्ठातुरेव नान्यस्य कस्यचित्सदाशिवादेराकाशाद्यभिमानिनः परतन्त्रस्य । उक्तं च स्कान्दे, ' सदाशिवः शब्दमूर्तिः स्पर्शमूर्तिर्महेश्वरः । रुद्रस्तेजोमयः साक्षाद्रसमूर्तिर्जनार्दनः ॥ गन्धमूर्तिश्चतुर्वक्त्रः इत्येते पंचमूर्तयः । सदाशिवादयो ह्येते पंचब्रह्मपदे स्थिताः । तेषां सृष्ट्यादयो लोकास्तदन्तर्यामिरूपतः ' इति । नन्वाकाशादिशब्दानां आकाशाद्यभिमानिदेवताधिष्ठातरीशानादिब्रह्मणि लक्षणावृत्तिस्वीकारे गौरवदोषः स्यादिति चेन्न । ' सेऽयं देवतैक्षत हन्ताहमिमास्तिस्रो देवताः । अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि ॥ ' (छां. ६. ३. २.) इति श्रुतेरेकस्यैवाधिष्ठानब्रह्मणः नामरूपविभागाय सर्ववस्त्वनुप्रवेशेन आकाशादितदभिमानिदेवतावाचकशब्दवृत्तिर्मुख्यैव । यथा आत्मनः ब्राह्मणादिशरीरप्रविष्टस्य ब्राह्मणादिशब्दवृत्तिः मुख्या । इत्यंगीकारात् । तदुक्तं भगवता बादरायणेन,— ' चराचरव्यपाश्रयस्तु स्याद्व्यपदेशोऽभाक्तस्तद्भावभावित्वात् ' (अ २. पा ३. अधि ९. सू १५) इत्यस्मिन् सूत्रे चराचरवाचिशब्दो ब्रह्मण्यभाक्त इत्युपदिष्टम् । तथैव विशेषार्थप्रकाशिकायां, ' आचारः स्यात् पृथ्वी गुरुरापः । शिव उदीर्यते तेजः । चर एव स्याद्वायुः प्रसाद आकाश इत्यु-

दाह्रियते ।' इति । अनुभवसूत्रेऽप्यस्याः श्रुतेः । 'आत्मन आकाशसंभूतिराकाशाद्वायुसंभवः । वायोरग्निसमुत्पत्तिरग्ने-राप उदाहृताः । अद्भ्यस्तु पृथ्वीसंभूतिर्लक्षण्यैक्यप्रभावतः ॥ ऐक्यस्थलादिभक्तान्तस्थलसंभूतिरीरिता ॥ इति । आकाशा-द्यभिमानिसदाशिवादि देवतारूपांगस्थल सृष्टिपरकत्वेनैव व्याख्यातत्वात् । तेषां सृष्ट्यादयो नोक्ताः' इति । पूर्वोक्तपुराणवाक्येनापीशनादि पंचब्रह्मणां सृष्टेर्नोक्तत्वात् । तेषां कारणत्वं सदाशिवादीनां कार्यत्वमवगन्तव्यम् । उक्तं चानुभवसूत्रे सदाशिवाद्यपरपर्यायशरणादीनामाकाशाद्यङ्ग-त्वम्— 'व्योमांगं शरणस्थलम्' इत्यादिना 'भक्तं भूम्यंगमिष्यते' इत्यन्तेन । कार्यत्वादेव सदाशिवादीना-मेकविज्ञानेन सर्वविज्ञानप्रश्नवाक्यमुपपद्यते । कार्यत्वं नाम न वियदादिवदुत्पत्तिमत्वम् । किन्तु जडत्वमशुद्धत्वम् । तच्च अज्ञानादि मलावृतत्वमत एव पुरुषतत्वं शुद्धाशुद्ध-तत्त्वेषु परिगणितम् । वृद्धजाबालोपनिषदि— 'माया कालो नियतिः कलाऽविद्यारागः पुरुषः' इति शुद्धाशुद्धानि सप्त' इति । तथैवान्यत्र 'कायो जडो हि जीवः स्याज्जडाजड-समाह्वयः । अजडः परमेशानस्तयोरैक्यं जडं विना ॥' प्रतिशरीरं भिन्नोऽपि जीवात्मैकशरीरावच्छेदेनैकोऽप्याधा-रादिस्थानेषु पृथिव्याद्यभिमानरूपाशुद्धिग्रन्थिप्रभावेन चतुर्मु-खादिनाम्ना व्यवह्रियते । चिति संकोच चित्तापरपर्याय पृथि-

व्यादित्रयोविंशति तत्त्वगर्भमूलकारणप्रकृत्यात्मकस्थूलदेहरूप-कार्मिकं सूक्ष्मदेहरूपमायीयकारणदेहात्मकाणवाशुद्धिरूपा-ज्ञानमलावरणस्यापगमे तु शुद्धात्मा साक्षाच्छिव एव भवति। 'आत्मायं केवलः शुद्धः शिवस्यांशः सदामलः । नित्यो निरंजनश्शान्तस्तस्मादात्मा स्वयं शिवः ॥' इत्यनुभवसूत्रोक्तेः। अलं प्रासंगिकेन । प्रकृतमनुसरामः । वस्तुतः स्थूलादिदेह-तद्गतपृथिव्याद्यभिमानरूपाशुद्धिविशिष्टत्वादेव शुद्धशिवांशा-त्मनः कार्यत्वमिति ध्येयम् । तस्मान्न जीवनित्यत्वानित्यत्व-बोधकश्रुत्योर्विरोधः । अशुद्ध्यात्मकबन्धदशायां जन्यत्वस्य शुध्यात्मकमुक्तिदशायां नित्यत्वस्याभ्युपगमात् । 'यतः प्रसूता जगतः प्रसूती तोयेन जीवान् विससर्ज' (महा-नारायण १. ४.) 'प्रजापतिः प्रजा असृजत' 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतिभ्यः सचेतनस्य जगत उत्पत्तिराम्नायते । 'ज्ञाज्ञौ द्वावजावीशनीशौ' (श्वे. १. ८.) 'न जीवो म्रियते' इत्यादिश्रुतिभ्यः उत्पत्तिर्नाशश्च प्रतिषिध्यते । तस्मादस्य मन्त्रस्य न विवर्तवादे तात्पर्यम् । किन्तु परिणामवादे तात्पर्यम् । चिच्छक्तिविशिष्टस्य ब्रह्मणोऽभिन्ननिमित्तोपादानकारणत्वात् । ब्रह्मणो माया-प्रतिबिम्बितरूपेण कारणत्वे स्वेन रूपेण कारणत्वाभावे 'एतस्माज्जायते' इत्यस्य मन्त्रस्य स्वेन रूपेण ब्रह्मणः कारणत्वप्रतिपादकस्य विरोधात् । न परव्याख्यानं मन्त्रानु-

कूलम् । किंच ब्रह्मैव यद्यन्त्यकार्यपर्यन्तेन तेन तेनाकारेण न विवर्तते इत्युच्येत तदा आकाशादीनां शशशृंगवत्तुच्छत्वमेव स्यात् । स्याच्च प्रागसद्रूपप्रपंचस्य रज्जुसर्पवद्विवर्तत्वांगीकारेऽसतः शशशृंगादेरपि विवर्तत्वम् । तदंगीकारे आकाशादिसत्यशशशृंगादितुच्छयोर्महद्वैलक्षण्यं न स्यात् । किं चाधिष्ठानस्यान्यथाभानस्य विवर्तत्वे चराचरप्रपंचातिरिक्तत्वेन ब्रह्मणोऽसत्वप्रसङ्गः । तत्त्वे 'विश्वाधिको रुद्रो महर्षिः' इत्यादिश्रुतिविरोधः । कार्यकारणभावबोधकानेकश्रुतिविरोधश्च । किंचान्यथात्वं भिन्नत्वमिति चेत् तस्यानुयोगित्वप्रतियोगित्वयोर्वक्तव्यत्वात् । ब्रह्मरूपाधिष्ठानप्रतियोगिकभेदस्यैवाप्रसिद्धेः । तन्मते आकाशादिप्रपंचस्यैवाभावादनुयोगित्वासिद्धेः । ब्रह्मणो निर्धर्मकत्वात् प्रतियोगित्वासिद्धेरन्यथात्वस्याप्रसिद्धौ तद्भानस्याप्यप्रसिद्धेः। किंच निर्विशेषं ब्रह्म कथं तत्तदाकारेण विवर्तते ? इत्यत्र दृष्टान्ताभावात् । रज्जुसर्पादिवत् किंचिद्विशेषांगीकारे निर्विशेषत्वभंगप्रसङ्गः । यदि तत्तत्कार्याकार्यविवर्तनानुकूलविलक्षणसामर्थ्यं ब्रह्मणि, तदास्मन्मतप्रवेशः । न चात एव वस्तुतः प्रपंचस्योत्पत्तेरेवाभाव इति वाच्यम् । 'अजामेकां लोहितशुक्लकृष्णाम्', 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इत्यादिश्रुतेरप्रामाण्यापत्तेः । न च वेदप्रामाण्यसिद्ध्यर्थमचेतनमायायाः जगत्कारणत्वं मायाप्रतिबिम्बिते-

श्वरस्य वा जगत्कारणत्वं वाच्यम् । अचेतनमायायाश्चेतनजीवेश्वरकारणत्वासंभवात् । नीरूपस्य ब्रह्मणः प्रतिबिम्बासंभवस्य दर्शितत्वात् न मायाप्रतिबिम्बितरूपेण ब्रह्मकारणत्वपरकव्याख्यानं युक्तम् ॥ ३ ॥

मूलम्—

अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ
दिशः श्रोत्रे वाग्विवृताश्च वेदाः ।
वायुः प्राणो हृदयं विश्वमस्य
पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥ ४ ॥

षट्स्थलपरशिवब्रह्मणश्चराचरविश्वकारणत्वेन विश्वाधिकत्वमुक्तमिदानीं तस्य तन्तूत्पन्नपटस्य तन्त्वात्मकत्वं, समुद्रोत्पन्नफेनतरंगादेः समुद्रात्मकत्वमिव स्वात्मशक्तिविकासेन विश्वात्मकत्वमाह 'अग्निर्मूर्धा' इति । अग्निः – अग्नित्वेन रूपितो द्युलोकः । 'असौ वाव लोको गौतमाग्निः' इति श्रुतेः । 'यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः । सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नमः' इति स्मृतेश्च । अस्येति – तृतीयपादस्थस्य पदस्य सर्वत्रानुषंगः कर्तव्यः । तथाचास्य अस्यैव परशिवब्रह्मणः मूर्धा – शिरः चक्षुषी–नेत्रे चन्द्रसूर्यौ । 'वन्दे सूर्यशशांकवह्निनयनं वन्दे

मुकुन्दप्रियम् । वन्दे भक्तजनाश्रयं च वरदं वन्दे शिवं शंकरम् ॥' इति स्कान्दोक्तेः । दिशः – प्राच्यादिरूपाः, श्रोत्रे – कर्णौ । विवृताः वर्णाध्वादिस्थूलरूपेण विवृतिं विकृतिं गताः, वेदाः – ऋगादयः, वाक् – वैखरीवाक् । उक्तं चाभियुक्तैः 'ततः शब्दात्मकत्वेन विवृताऽर्थमयी भवेत्' इति । 'स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा । वैखरी वाक्प्रयोक्तॄणां प्राणवृत्तिनिबन्धना ॥' इति । नन्वस्य ब्रह्मणः प्राणस्यैवाभावात् कथमस्य वाचः प्राणव्यापारनिबन्धनत्वमित्यत आह– 'वायुः प्राणः' इति । अस्य वायुः महावायुरेव । प्राणः – विश्वमयशरीरान्तःसंचारी वायुः । अस्य विश्वं चराचरात्मकं सर्वं हृदयं प्रणवमयचिच्छक्त्यात्मकं 'हृदयं मूलविद्या' इत्यागमोक्तेः । 'हृदयं तद्विजानीयाद्विश्वस्यायतनं महत्' इति श्रुतेः । 'वृक्षस्थं पत्रपुष्पादिवटबीजास्थितं यथा । तथा हृदयबीजस्थं विश्वमेतच्चराचरम् ॥' इति रेणुकभगवत्पादोक्तेश्च । 'चिति स्वतन्त्रा विश्वसिद्धिहेतुः' (प्रत्यभिज्ञाहृदय. सू. १) इति शक्तिसूत्रस्थितेः । सदाशिवादिभूम्यन्तचराचरविश्वोत्पादनस्वतन्त्रचिच्छक्त्यामस्यां हृदयाख्यायां परशिवाभिन्नायां प्रसरन्त्यां सर्वस्य विश्वस्य प्रसरणस्य निवृत्तप्रसरायां च निमेषस्य 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्तीति ।' (तै. भृ. १) 'सर्वाणि ह वा

इमानि भूतान्याकाशादेव समुत्पद्यन्ते । आकाशं प्रत्यस्तं यन्ति ।' (छां. १. ९. १.) इत्यादिश्रुतिसिद्धत्वात् । उपादानोपादेययोरभिन्नत्वात् विश्वमेवास्य हृदयमित्युक्तम् । एतदन्यस्य मायाप्रकृत्यादेश्चित्प्रकाशभिन्नत्वाज्जडत्वान्न सदाशिवाद्यजडकारणत्वम् । न वा स्वातन्त्र्येण जडप्रपंचकारणत्वम् । किन्तु स्वप्रतिस्फुरितच्चिच्छक्तिरूपेणैव । पृथिवी – भूमिः । पद्भ्यां – पादौ । 'प्रकृत्यादिभ्य उपसङ्ख्यानम्' इति तृतीया । एष उक्तः परशिवो विश्वात्मको हि विश्वरूप एवेत्यर्थः । सर्वभूतान्तरात्मा – सर्वेषां भूतानां जीवानामन्तरात्मापि भवति । तत्तत्प्राणिप्रेरकत्वेन सर्वहृदयान्तर्वर्तीश्वरोऽपि भवतीत्यर्थः । 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥' (श्वे. ६.११) इति श्रुतेः । 'यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्मा अन्तर्याम्यमृतः ।' (बृ. ३. ७. १४.) इति श्रुतेः । उक्तं च कृष्णगीतायां 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥' इति । उक्तं च रेणुकभगवत्पादाचार्यैः 'सर्वेषां प्रेरकत्वेन शम्भुरन्तस्थितः सदा ।' (सिद्धान्त प. १८–१०.) इति ॥ ४ ॥

मूलम् –

तस्मादग्निः समिधो यस्य सूर्यः
सोमात्पर्जन्य ओषधयः पृथिव्याम् ।
पुमान्रेतः सिञ्चति योषितायां
बह्वीः प्रजाः पुरुषात्संप्रसूताः ॥ ५ ॥

उक्तादक्षरपरशिवब्रह्मणः एव स्थूलप्रपंचलीलायां द्युलोकादि पंचाग्न्युत्पत्यनन्तरं प्रजोत्पत्तिमाह 'तस्मात्' इति । तस्मात् – परशिवब्रह्मणोऽक्षरात् यस्य – द्युलोकाग्नेः सूर्यः समिधः काष्ठरूपः सोऽग्निः अग्नित्वेन रूपितो द्युलोको जात इति शेषः । सोमात् – द्युलोकाग्न्युत्पन्नात् चन्द्रात् पर्जन्यो मेघाख्यो द्वितीयाग्निः संभूत इति शेषः । पर्जन्यात् – पृथिव्यां भूम्याख्य तृतीयाग्नौ ओषधयः व्रीहियवादिरूपाः वृष्टिद्वारा समुत्पद्यन्त इति शेषः । ओषधिभ्यश्चान्नरूपेण चतुर्थाग्निरूपपुरुषं प्राप्ताभ्यो रेतो जायते इत्यध्याहृत्य पुमान् चतुर्थाग्निरूपः पुरुषः रेतः – शुक्रं योषितायां – पंचमाग्नि-रूपायां स्त्रियां सिंचति – प्रक्षिपतीति योजयितव्यम् । एवं क्रमेण बह्वीः – बह्व्यः प्रजाः – मनुष्यादयः प्राणिवर्गाः पुरुषादुक्तादक्षराद्ब्रह्मणः संप्रसूताः – सम्यगाविर्भवन्तीत्यर्थः ॥ ५ ॥

मूलम्—

तस्मादृचः साम यजूँषि दीक्षा
यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च ।
संवत्सरश्च यजमानश्च लोकाः
सोमो यत्र पवते यत्र सूर्यः ॥ ६ ॥

किं च तस्मात् – परशिवब्रह्मणः शक्तिविशिष्टात् ऋग्यजुःसामवेदाश्च दीक्षाः अप्राकृताः प्राकृताश्च ज्ञानदान-मलक्षपणधर्मिण्यश्चाप्राकृताः क्रियाज्ञानशक्त्यात्मकाः । तदुक्तं स्पन्दप्रदीपिकायां, 'ददाति ज्ञानसद्भावं क्षपयत्य-खिलं मलम् । बोधानुवेधाद्दीक्षोक्ता दानक्षपणधर्मिणी ॥' इति । तथैव रेणुकभगवत्पादाचार्यैरप्युक्तं, 'दीयते च शिवज्ञानं क्षीयते पाशबन्धनम् । यस्मादतः समाख्याता दीक्षेतीयं विचक्षणैः ॥' इति । न भ्रमितव्यमप्राकृतदीक्षा-यास्तांत्रिकत्वमिति । दीक्षाशब्दितानां विभूतिलिंगधारणा-दीनां 'भूत्यै न प्रमदितव्यं', 'लिंगांगशोभा मोक्षमार्गैक-निष्ठाः', 'अमृतस्य देवधारणो भूयासम्' इत्यादिप्रत्यक्ष-श्रुत्यैव विधानात् । दीक्षाशब्दितवीरशैवनियमानां वैदिकत्वं सिद्धम् । पशुपतिसंस्कारसाहित्यतद्राहित्यप्रयुक्तत्वादप्राकृत-त्वप्राकृतत्वयोः । वीरशैवानां शिवसंस्काररूपदीक्षैव । तदुक्तं रेणुकभगवत्पादाचार्येण 'विशुद्धाः प्राकृताश्चेति द्विविधा मानुषा स्मृताः । शिवसंस्कारिणः शुद्धा इतरे

प्राकृता मताः ॥' इति ज्ञानदानमलक्षपणदीक्षारूपाशिवसंस्कारसंपन्नानां पूर्वकाण्डीय पाशाश्रयपशुकर्मानुष्ठाने प्रयोजनाभावात् पूर्वाश्रयनिरसनस्थलविरोधाच्च । यज्ञाश्चाग्निहोत्रादयो यूपरहिताः सर्वे क्रतवश्च । सयूपा विश्वजिदादयः शिवार्चादयः शिवयज्ञाश्च । प्राकृताप्राकृतानुष्ठेयाश्च । 'किं यज्ञैरग्निहोत्राद्यैः किं तपोभिश्च दुश्चरैः । लिंगार्चनरतिर्यस्य स सिद्धः सर्वकर्मसु ॥' इति रेणुकभगवत्पादाचार्योक्तेः । न ह्यनुष्ठेयानि पशुकर्माणि वीरशैवैः । दक्षिणाश्च संजाता इति शेषः । संवत्सरादयः कलाः । यजमानश्च तत्तत्कर्मफलभूता लोकाश्चोत्पन्ना भवन्तीत्यर्थः । के ते लोकाः इत्यत आह– 'यत्र' इति यत्र लोके सोमः–स्रावः पवते-प्रकाशते यत्र लोकेषु सूर्यस्तपतीति शेषः । इत्येतत्सर्वं तस्मादेव ब्रह्मणो जातमित्यर्थः ॥ ६ ॥

मूलम्—

तस्माच्च देवा बहुधा संप्रसूताः
साध्या मनुष्याः पशवो वयांसि ।
प्राणापानौ व्रीहियवौ तपश्च
श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च ॥ ७ ॥

किं च तस्माच्च तस्मादेवाक्षरात् देवाः पृथिव्याद्यभि-

मानिनो ब्रह्मविष्ण्वादयोऽङ्गशब्दिताः 'ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते ।' (अथर्वशिखा) इति । 'विष्णुरित्था परमस्य विद्वान्' (ऋग्वेद ७. ५. २९) 'सोमः पवते' (ऋग्वेद. ७. ४. ६.) इति श्रुत्यन्तरात् । बहुधा - नानाविधाः, संप्रसूताः - संजाताः । साध्याः—साध्यनामकाः देवविशेषाः । तस्मात्संप्रसूताः इति सर्वप्रथमाबहुवचनांतपदैः संबन्धः कर्तव्यः । मनुष्या ब्राह्मणादयश्चत्वारो वर्णाः । तदुक्तं क्रियासारे चतुर्विंशोपदेशे, 'अथ तस्य महेशस्य घनलिंग-स्वरूपिणः । स्थूलप्रपंचनिर्माणलीलायां तेषु वै पुनः ॥१४८॥ आचारादिषु लिंगेषु क्रियाशक्तेः कलाभवत् । अन्यपर्याय-रूपा च निवृत्तिरथ तद्वशात् ॥ १४९ ॥ अहंकारादि-भूम्यन्त त्रयोविंशतितत्वकम् । तन्मूलकारणीभूता भूयुः सत्वादयो गुणाः ॥ १५० ॥ तदात्मिकायाः प्रकृतेरन्या चेयं ततः पुनः । मायातत्वं समुत्पन्नमथ सत्वादिषु त्रिषु ॥१५१॥ संप्रविष्टं तु चैतन्यं तदेवं च निगद्यते । रुद्रो विष्णुरजश्चेति सद्भिः सूक्ष्मार्थदर्शिभिः ॥ १५२ ॥ क्रमेण वह्निसूर्यश्च सोमश्चैतेषु वै पुनः । अन्तर्गताश्च चत्वारो वर्णाश्च ब्राह्म-णादयः ॥ १५३ ॥' इति । पशवः — गवादयो ग्राम्याः आरण्याश्च मृगादयः । वयांसि — पक्षिणः । प्राणापानौ प्राणिनां जीवनहेतुभूतौ उपलक्षणमेतदितरप्राणवृत्तीनामपि । व्रीहियवौ— व्रीहियवशब्देन धान्यमात्रोपलक्षणं कृतमिति

बोध्यम् । तपः – वीरशैवाभिमतं शिवपूजार्थं सामग्रीसंपादने शरीरसंशोषणरूपम् । प्रसिद्धं कृच्छ्रचान्द्रायणादिरूपं वा । श्रद्धा–आस्तिक्यबुद्धिः । सत्यं–यथार्थभाषणं, ब्रह्मचर्यं–अष्टविधमैथुनत्यागरूपम्, विधिः – नित्यनैमित्तिकादिः । चकारोऽनुक्तसमुच्चयार्थकः । इत्येतत्सर्वं तस्मादेव संप्रसूतमित्यर्थः ॥ ७ ॥

मूलम्—

सप्त प्राणाः प्रभवन्ति तस्मात्
सप्तार्चिषः समिधः सप्तहोमाः ।
सप्त इमे लोका येषु चरन्ति प्राणा
गुहाशया निहिताः सप्त सप्त ॥ ८ ॥

किं च सप्तप्राणाः – द्वे श्रोत्रे, द्वे चक्षुषी, द्वे घ्राणे, एका वाक् इति शिरसि स्थितानि सप्तेन्द्रियाणि । प्रभवन्ति - तस्मादेवाक्षरात् समुत्पद्यन्ते । सप्तार्चिषः – उक्तेन्द्रियव्यापाराः सप्त । तस्मादेवाक्षरात्प्रभवन्तीति सर्वत्रानुषंगः । सप्त समिधः – सप्त विषयाः, स्वविषयैरेव समिध्यन्ते हि सप्त प्राणाः । सप्त होमाः – तद्विषयकोपासनानि । सप्त इमे लोकाः – इन्द्रियगोलकरूपाः सप्तसंख्याकाः, येषु सप्त लोकेषु-गोलकेषु संचरन्ति प्राणाः – उक्तसप्तेन्द्रियाणि । कीदृशाः प्राणाः,

गुहाशयाः – गुहायां हृदये शेरत इति गुहाशयाः निहिताः सप्त सप्त। प्रतिप्राणिशरीरं सप्त सप्त संख्याकाः स्थापिताः सर्वेश्वरेणेति शेषः। यद्वा – सप्तप्राणाः – पंच ज्ञानेन्द्रियाणि मनोबुद्धिश्चेति सप्तप्राणाः प्रभवन्ति। सप्तार्चिषः – गार्हपत्यादयः, सप्तार्चिषः – कालीकराल्यादिसप्तजिह्वाविशिष्टगार्हपत्याद्यग्नयः इत्यर्थः। समिदाद्युपकरणानि सप्तकालीकराल्यादि सप्तजिह्वाः इमे परिदृश्यमानाः सप्त लोकाः। सप्तपदमुपलक्षणम्। चतुर्दशभुवनानीत्यर्थः। प्रभवन्ति – येषु चतुर्दशभुवनेषु प्राणाः गुहाशयाः उक्तसप्तप्राणा अपि ईश्वरेण निहिताः सन्तः संचरन्ति। सप्त सप्तेति वीप्सा पुरुषभेदाभिप्रायेण ॥ ८ ॥

मूलम्—

अतः समुद्रा गिरयश्च सर्वेऽ-
स्मात्स्यन्दन्ते सिन्धवः सर्वरूपाः।
अतश्च सर्वा ओषधयो रसश्च
येनैष भूतैस्तिष्ठते ह्यन्तरात्मा ॥ ९ ॥

किं च अतः – अस्मात् परमेश्वरात्, समुद्राः – क्षाराद्याः सप्त सागराः, प्रभवन्ति, इति पूर्वमन्त्रात्क्रियानुषंगः। सर्वे – निखिलाः, गिरयः – पर्वताश्च प्रभवन्ति।

तस्मात्प्रकृतादक्षरात् परमेश्वरात् सर्वरूपाः – अनेकरूपाः सिन्धवः – नद्यः, स्यन्दन्ते – स्रवन्ति । अतश्च – अस्मादेवाक्षराद्ब्रह्मण एव, सर्वाः – समस्ता, ओषधयः – व्रीहियवादिरूपाः जाताः इति शेषः । रसश्च – मधुरादिषड्विधोऽपि रसः, तस्मादेव जात इत्यर्थः । एषः अक्षरः परशिवः, हि यस्मात् कारणात् येन यैः, वचनव्यत्ययश्छान्दसः, भूतैः – पृथिव्यादि भूताभिमानिब्रह्मादिदेवैः सह सामानाधिकरण्येन तिष्ठति । तदधिष्ठानतया तदुपासनार्थं ब्रह्मादिस्थानेषु आधारादिषु तिष्ठति । तस्मात्तेषामन्तरात्मा भवत्यन्तर्यामितया अन्तरात्मेति संज्ञां लभते । तदुक्तं रेणुकभगवत्पादाचार्यैः, 'अन्तः षट्चक्ररूढानि पंकजानि विभावयेत् । ब्रह्मादिस्थानभूतानि भ्रूमध्यान्तानि मूलतः ॥ भ्रूमध्यादूर्ध्वभागे तु सहस्रदलमम्बुजम् । भावयेत्तत्र विमलं चन्द्रबिम्बं तदन्तरे ॥ सूक्ष्मरन्ध्रं विजानीयात् तत्कैलासपदं विदुः । तत्रस्थं भावयेच्छम्भुं सर्वकारणकारणम् ॥' ( सि. शि. प १२, ५. ६. ७) इति । एषः – शिवः, सर्वभूतान्तरात्मापि न जीवदुःखेन दुःखी भवति । 'सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः । एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ॥' (कठ. ६. १२) इति श्रुतेः । तस्मादत्रान्तरात्मन्शब्दस्य न सूक्ष्मदेहपरकत्वेन कृतं परव्याख्यानं युक्तम् । सन्दर्भविरोधात् ।

अन्यत्र महानारायणोपनिषदि वृषभेन्द्रपण्डितशिवाचार्यैरपि शिवपरत्वेन व्याख्यानाच्च ॥ ९ ॥

'शुद्धतत्त्वानुसन्धानाद्वाऽपशुशक्तिः' (शिवसूत्र. १६-१.) इति शिवसूत्रोक्तप्रकारेण स्वस्यपशुपतिशक्तिप्राप्त्यर्थं मृत्सिन्धुतन्त्वाद्युपादानकत्वात् घटतरङ्गपटादीनां तदभिन्नत्वमिव शिवतत्त्वोपादानकत्वात् सर्वस्य जगतः शिवाभिन्नत्वानुसन्धानमाह 'पुरुष एवेदमिति'—

मूलम्—

पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम् ।
एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं
विकिरतीह सोम्य ॥ १० ॥

इति द्वितीयमुण्डके प्रथमः खण्डः

इदमक्षरात् पुरुषादुत्पन्नं विश्वं स्थूलसूक्ष्मकारणरूपं धरादिमायांतं सर्वं जगत् । पुरुष एव – परमकारणपरमात्मरूपं लिंगमेव । 'यस्मिन् समस्तवस्तूनि कल्लोला इव वारिधौ । संभूय विलयं यान्ति तद्रूपं परमात्मनः ॥' (सि. शि. १८. ५) इति । 'पीठिका परमा शक्तिर्लिंगं साक्षात्परः शिवः । शिवशक्तिसमायोगं विश्वं लिंगं तदु-

च्यते ॥' (सि. शि. ११. ३२) इति रेणुकभगवत्पादोक्तेः । 'न वज्रचक्रांकसरोरुहांकं लिंगांकितं पश्य जगद्भगांकम् ।' 'ज्ञानकर्मेन्द्रियैर्विश्वं चित्क्रियालिंगरूपकम् ।' इति पुराणोक्तेश्च । 'ये ये पदार्था लिंगांकास्ते ते शर्वविभूतयः । अर्था भगांकिता ये ये ते ते गौर्या विभूतयः ॥' लैंगोत्तरभाग. अ. १२. श्लो. ३१) इति पुराणोक्तेश्च । सर्वं विश्वं पुरुष एव । पुरि – स्थूलादिशरीरे इष्टादिलिंगरूपेण शयनात् पुरुषसंज्ञकं परशिवलिंगमेव । न हि विश्वं नाम परमात्मनो परशिवलिंगादत्यन्तभिन्नमास्ति । अतो यत्पृष्टं 'कस्मिन्नु भगवो, विज्ञाते सर्वमिदं विज्ञातं भवति' इति तदुत्तरितम् । अस्मिन्नेव परमकारणे परशिवलिंगे विज्ञाते सर्वं विज्ञातं भवति । सर्वस्य कार्यस्य विज्ञातपरमकारणाभिन्नत्वात् । तथैव श्रीशम्भुभट्टारकेनाप्युक्तं 'एको भावः सर्वभावस्वभावः सर्वे भावा एकभावस्वभावाः । एको भावस्तत्त्वतो येन दृष्टः सर्वे भावास्तत्त्वतस्तेन दृष्टाः ॥' इति । कृष्णगीतायामपि, 'सर्वभूतेषु येनैकं भावमक्षयमीक्षते । अविभक्तं विभक्तेषु तद्ज्ञानं विद्धि सात्विकम् ॥' ननु स्थूलसूक्ष्मादिभेदेन त्रिविधप्रपंचस्य त्रिविधकारणत्वावश्यंभावात् । स्थूलादेः विराडाद्यपरपर्यायकेष्टादेः कारणत्वात् कार्यस्य कारणरूपतापत्तावपि कार्यस्य त्रिविधकारणाभिन्नत्वे कथमेकविज्ञानेन सर्वविज्ञानं भवतीत्याशंकायामाह 'कर्म तपो

ब्रह्म परामृतम् ' इति । कर्मपदेन कर्मविग्रहमिष्टलिंगं स्थूलप्रपंचकारणं लक्ष्यते । ' कर्मविग्रहकामारे कलयामि करांवुजे । ' इति नीलकण्ठशिवाचार्योक्तेः । ' गुरोर्विज्ञानयोगेन क्रिया यत्र विलीयते । तत्क्रियालिंगमाख्यातं सर्वैरागमपारगैः ॥ ' इति रेणुकभगवत्पादोक्तेः । ' शिष्यपाणितले दत्ता या दीक्षा सा क्रियोच्यते ' इत्यनुभवसूत्रोक्तेः । तपः उपासनज्ञानविषयं प्राणलिंगं, सूक्ष्मप्रपंचकारणम् । ब्रह्म – भावलिंगं, भावग्राह्यं, स्थूलसूक्ष्मकारणजडमायाकारणम् । ' क्रिया यथा लयं प्राप्ता तथा भावोऽपि लीयते । यत्र तद्देशिकैरुक्तं भावलिंगमिति स्फुटम् ॥ ' (सि. प. १५. १.) इति रेणुकभगवत्पादोक्तेः । एतत्कारणरूपलिंगत्रयमपि परामृतं पुरुषरूपपरशिवलिंगमेव – उपासनार्थमेव त्रिविधत्वात् । केवलं स्थूलसूक्ष्मकारणरूपोपाधिभेदेनैव भेदात् । क्रियाशक्तिप्रधानत्वात् – स्थूलप्रपंचकारणत्वात् दृक्कलाग्राह्यत्वात् कर्मलिंगं स्थूलमिदमेवेष्टलिंगं बाह्यमिति यावत् । तत्र स्थूलप्रपंचार्पणानन्तरं तत्तादात्म्यभावनाभ्यासदार्ढ्यानन्तरं तपःपदेनोक्तं उपासनाविषयं प्राणलिंगं सूक्ष्मप्रपंचकारणं सूक्ष्ममाभ्यन्तरं मनोग्राह्यमवलम्ब्य तत्र सूक्ष्मप्रपंचं समर्प्य तदभेद चिन्तनदार्ढ्यानन्तरं ब्रह्मपदेनोक्तभावलिंगं भावग्राह्यं सबाह्याभ्यन्तरं कारणशरीररूपमायाकारणमवलंब्य तत्र मायारूप कारणशरीरमपि समर्प्य तत्र स्वात्माभेदानु-

सन्धानदार्ढ्यसमुदित शिवसाक्षात्कारे 'नाहं विश्वात्मकः शिवः' इत्यज्ञानबन्धमाणवं मलं कारणशरीररूपं स्थूल-सूक्ष्मात्मककार्मिकमायीयमलकारणरूपं स्वकारणे ऊर्ध्व-मायायां विलीनं भवतीत्याह 'एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरति' इति । एतत्सर्वात्मक परशिव-रूपमूर्ध्वलिंगं गुहायां सर्वप्राणिनां आधारादिहृत्त्रये हृत्त्रयं चोपदिष्टं भगवता रेणुकाचार्येण 'आधारे कनकप्रख्यं हृदये विद्रुमप्रभम्। भ्रूमध्ये स्फटिकच्छायं लिंगयोगी विभावयेत्॥' इति । निहितं–लिंगरूपेण स्थितं, यः–अधिकारी शुद्धात्मा, वेद–स्वसामरस्येन नदीसमुद्रन्यायेन जानाति, सः इह जन्मनि अविद्याग्रन्थिं 'नाहं विश्वात्मकः शिवः' इत्यन्योन्याभावबुद्धि ग्रन्थिवद्दुर्मोचां, विकिरति – जडमायां निरस्यति । 'कॄ विक्षेपे' इति धातुः । सौम्य – हे प्रियदर्शन, उक्तं च भगवता बादरायणेन लैंगोत्तरभागे विंशतितमेऽध्याये—'लिंगं तु त्रिविधं प्रोक्तं स्थूलं सूक्ष्मं तु कारणम्। धारयन्तो नराः स्थूलं कारणं संप्रयान्ति हि । कुर्यात्रिपुटिसन्धानं शिवसायुज्यकारणम् ॥९१॥ वक्ष्ये त्रिपुटिसन्धानलक्षणं शिव-योगिनाम्। स्थूललिंगस्य देहस्य सूक्ष्मस्य मनसस्तथा ॥ ९२ ॥ कारणस्यात्मनो नित्यं कुर्यादैक्यमतन्द्रितः। देहेन (लिंगेन इति पाठान्तरम्) धारयेल्लिंगं ध्यायेच्चित्तेन शांकरम् ॥ ९३ ॥ स्वात्मना भावयेत्पूर्णमैक्यभावेन सर्वतः । एतत्रिपुटिसंधान-

लक्षणं परिकीर्तितम् ॥ ९४ ॥ कीटो भ्रमरयोगेन भ्रमरो भवति ध्रुवम् । मानवः शिवयोगेन शिवो भवति निश्चयम् ॥ ॥ ९५ ॥ अनेन वर्त्मना गच्छन् स जीवन्नेव शंकरः ।' इति। सूत्रितं च, 'उपासात्रैविध्यादाश्रितत्वादिह तद्योगात्' इति । अनुभवसूत्रेऽप्युक्तं, 'भावलिंगं परं तत्त्वं प्राणलिंगं तु सूक्ष्मकम् । इष्टलिंगं भवेत् स्थूलमेतल्लिंगत्रयं स्मृतम् ॥' इति । रेणुकभगवत्पादाचार्यैरप्युक्तं, 'लिंगं तु त्रिविधं प्रोक्तं स्थूलं सूक्ष्मं परात्परम्' इति । यद्यपि परामृतशब्दवाच्यमहालिंगस्य परशिवब्रह्मणोऽपरिच्छिन्नत्वादेकत्वात् स्थानशून्यत्वान्नोपास्यत्वं, तथापि भक्तध्यानपूजार्थं स्वस्वातन्त्र्यापरपर्यायमायाशक्त्या घृतकाठिन्यन्यायेन परिच्छिन्नत्वात् स्थानभेदेन लिंगत्रयरूपत्वादुपास्यत्वात् न 'कर्म तपो ब्रह्म' शब्दवैयर्थ्यम् । परव्याख्याने वैयर्थ्यं दुर्वारं, विश्वपरकत्वेन व्याख्यानात् । कार्यात्मकविश्वस्य पुरुषादुत्पन्नस्य पूर्वमन्त्रप्राप्तस्यात्रेदं पदनिर्दिष्टस्य 'पुरुष एव' इति पुरुषाभिन्नत्वप्रतिपादनमनेनाभिमतमिति स्पष्टं ज्ञायमानत्वात् ॥ १० ॥

इति द्वितीयमुण्डक प्रथमखण्ड वीरशैवभाष्यं

हरगुरुचरचरणार्पितं भूयात् ॥

## अथ द्वितीयमुण्डके द्वितीयः खण्डः

परशिवमहालिंगादुत्पन्नं विश्वं परशिवमयमेवेति शिवजगन्मयस्थलोक्तरीत्या तत्र विश्वाभिन्नत्वानुसंधानरूप उपाय उक्तः । इदानीं तत्सृष्टस्थूलादिपदार्थत्रयात्मकस्य विश्वस्य तस्मिन् स्थूलेष्टादिलिंगरूपे ब्रह्मण्यर्पणानन्तरं तद्विश्वमर्पितं प्रसादरूपेणैव ज्ञात्वानुभोक्तव्यं नान्यथेत्यनुशास्त्ययं मन्त्रः ।

मूलम्—

आविः सन्निहितं गुहाचरं नाम
महत्पदमत्रैतत् समर्पितम् ।
एजत्प्राणन्निमिषच्च यदेतज्जानथ सद-
सद्वरेण्यं परं विज्ञानाद्यद्वरिष्ठं प्रजानाम् ॥ १ ॥

'आविः' इति गुहाचरं – गुहासु सर्वप्राणिनां हृदयरूपासु चरतीति गुहाचरं, हृदयगुहास्थितं नाम प्रसिद्धं पूर्वोक्तमक्षरमेव महत् महालिंगरूपं पदं स्थलम् । 'परंपरस्थं गहनादनादिमेकं निविष्टं बहुधा गुहासु । सर्वालयं सर्वचराचरस्थं त्वामेव शम्भुं शरणं प्रपद्ये ॥' इति परमार्थसारोक्तेः । हृदयदर्पणे प्रकाशमानत्वात् हृदयगुहाचरमि-

त्युक्तम् । उक्तं च परमार्थसारे, ‘राहुरदृश्योऽपि यथा शशिबिम्बस्थः प्रकाशते तद्वत् । सर्वगतोऽप्ययमात्मा विषयाश्रयणेन धीमुकुरे ॥’ इति । चराचरात्मकविश्व-विश्रान्तिस्थानभूतत्वात् परशिवमहालिंगमेव महत् पदमि-त्युक्तम् । ‘आद्यन्तशून्यममलं परिपूर्णमेकं सूक्ष्मं परात्पर-मनामयमप्रमेयम् । भावैकगम्यमजडं शिवतत्वमाहुश्चिच्छक्ति-संस्फुरणरूपमहात्मलिंगम् ॥’ इत्यनुभवसूत्रोक्तेः । आविः — गुरुचरेष्टरूपेण प्रादुर्भूतं बाह्येन्द्रियग्राह्यं सदित्यर्थः । ‘प्रकाशे प्रादुराविस्स्यात्’ इत्यमरोक्तेः । ‘त्रिपादूर्ध्वं उदैत्पुरुषः’ इति श्रुत्यन्तरात् । ‘एक एव शिवः साक्षात् सर्वानुग्रह-कारकः । गुरुजंगमलिंगात्मा वर्तते भुक्तिमुक्तिदः ॥’ (सिद्धान्त. ९. २.) इति रेणुकभगवत्पादाचार्योक्तेः । ‘त्रिपादिति त्रयः पादा यस्य स स्यात्त्रिपाच्छिवः । गुरुर्लिङ्गं जंगमश्च तेषां पादत्रयस्त्रिपात् ॥’ इति श्रीनीलकण्ठशिवा-चार्योक्तेः । ‘अप्रत्यक्षो महादेवः सर्वेषामात्ममायया । प्रत्यक्षो गुरुरूपेण वर्तते भक्तिसिद्धये ॥’ (सिद्धान्त. ९. ३.) इति रेणुकभगवत्पादाचार्योक्तेः। उक्तं च वीरागमे, ‘ललाटलोचनं चान्द्रीं कलामपि च दोर्द्वयम् । अन्तर्निधाय वर्तेऽहं गुरुरूपो महेश्वरि ॥’ ‘सर्वलोकोपकाराय यो देवः परमेश्वरः । चरत्यतिथिरूपेण नमस्ते जंगमात्मने ॥’ इति । सन्निहितं — भक्तकर्तृकषट्त्रिंशद्विभूत्यभ्युक्षणाह्वानाद्यर्चनोपचारग्रहणार्थ —

मन्तिकस्थम् । 'तदिहान्तिके च' इत्यत्रैव वक्ष्यमाणत्वात् । 'तदन्तिके' इति (ईशावास्य) श्रुत्यन्तराच्च अत्राह्वानं करालपीठेऽङ्गगतसज्जकस्थलिंगमानीयोपवेशनम् । नातो 'संस्कारेषु लिंगेषु सदा सन्निहितः शिवः । तत्राह्वानं न कर्तव्यं प्रतिपत्तिविरोधकम् ॥' (सिद्धान्त. १०. ३.) इति रेणुकभगवत्पादाचार्योक्तेर्विरोधः । 'अत्र' परशिव-महालिंगे इष्टादिरूपे 'एतत्' वक्ष्यमाणमात्मभोग्यस्थूलादि-द्रव्यत्रयं मलरूपं 'समर्पितं' चिश्वाद्यात्मना प्रविलापितं स्वशुद्ध्यर्थम् । तदुक्तं रेणुकभगवत्पादाचार्येण 'आत्मयोगाय नियतं यद्यद्द्रव्यं समाहितम् । तत्तत्समर्प्य देवाय भुञ्जीता-त्मविशुद्धये ॥' इति । उक्तं चानुभवसूत्रे 'आत्मोपभोग-जातानि द्रव्याणि त्रिविधानि हि । स्थूलाख्यं प्रविविक्ताख्य-मानन्दाख्यमिति त्रिधा ॥ स्थूलद्रव्यं भवेद्रूपं प्रविविक्तं रुचिर्भवेत् । आनन्दस्तु भवेत्तृप्तिरेवमेव पृथक्क्रमात् ॥ बहिरंगार्पणे रूपमन्तरंगार्पणे रुचिः । आत्मसंगमयं साक्षात् आनन्दार्पणमुच्यते ॥ आत्मांगार्पणमेवात्र तृप्तिरित्यभिधीयते ॥ रूपद्रव्यार्पको विश्व इष्टलिंगे स्वभावतः । रुचिद्रव्यार्पकः साक्षात्प्राणलिंगे तु तैजसः ॥ भावलिंगे सदा प्राज्ञ आनन्दा-र्पक उच्यते ॥' इति । एतत्किमित्यत आह 'एजदिति' । यदेजत् – कंपमानं बहिरन्तःकरणग्राह्यं जाग्रद्विषयं स्थूलं, धरादिपुरुषतत्वान्तम् । प्राणत् – उन्मिषन्मनोमात्रजन्यज्ञान-

विषयं स्वाप्निकं प्रविविक्तं सूक्ष्मं पंचकञ्चुकम् । निमिषच्च – बाह्येन्द्रियमनोनिमेषवच्च सौषुप्तम् । मायामयमानन्दरूपम् । 'जागरितस्थानो बहिःप्रज्ञः', 'स्वप्नस्थानोऽन्तः प्रज्ञः' 'यत्र सुप्तो न कंचन कामं कामयते । न कंचन स्वप्नं पश्यति । तत्सुषुप्तम् । (माण्डूक्य, ३. ४. ५) इति श्रुत्यन्तरात् । 'ज्ञानं जाग्रत्' 'स्वप्नो विकल्पाः' 'अविवेको मायासौषुप्तम्' (शिवसू. १. ८. ९. १०) इति शिवसूत्रस्थितेः । 'अक्षैर्यो-र्थग्रहः पुंसां तज्जाग्रदिति कथ्यते । यत्तैर्विनार्थस्मरणं मनसा स्वप्नसंज्ञितम् ॥ यत्रार्थस्मरणे न स्तत्तत्सौषुप्तमुदाहृतम् ॥' इति स्पन्दप्रदीपिकोक्तेः । अत्र 'च' कारस्समुच्चयार्थकः । यदेतत्स्थूलसूक्ष्मपरमावरणलक्षणं पृथिव्यादि मायातत्त्वांतं तण्डुलस्य तुषकंचुक किंशारुकमिवाच्छादकं स्थूलसूक्ष्मकारण-त्रय, मलत्रय, कोशत्रय शब्दितं दीक्षात्रय परिशुद्धमत एव । यत्र महालिंगे इष्टादिरूपे चतुरस्रदीर्घवर्तुलस्थूलद्वित्रिपात्रेषु तत्तदाकारपरिमाणवतो गोक्षीरमिव बृहत्पात्रस्थक्षीरे समर्पितं तदेतत् महालिंगमेकमेव जानथ, भोक्तृभोग्यभोगात्मकत्वेना-वगच्छत शिष्या यूयमन्यथा मललेपः स्यादेव युष्माकम् । 'त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यो भवेत् । त्रिविधं प्रति यो वेद स भुञ्जानो न लिप्यते ॥' इत्यनुभवसूत्रोक्तेः । जाग्रदादिविषयं यत् स्थूलसूक्ष्मपररूपमलत्रयं तदिष्टादि-लिंगरूपे महालिंगे समर्प्य नाहं स्थूलादिः किंत्विष्टादि-

महालिंगमेवेति स्वसामरस्येनैव ध्यातव्यमवगन्तव्यमन्यथा वन्धनिवृत्तिर्न स्यात् इत्याशयः। तथा च श्रुतिः, 'जाग्रत् स्वप्नसुषुप्त्यादिप्रपंचं यत्प्रकाशते। तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते॥' (कैवल्ये १. १६) इति श्रुतेः। 'जाग्रत्स्वप्नसुषुप्त्यादिसर्वावस्थासु सर्वदा। लिंगार्पितोपभोगेन निर्लेपोऽयं न संशयः॥' इत्यनुभवसूत्रोक्तेः। तत् पुनः कथंभूतमित्यत्राह सदसद्वरेण्यमिति। सदसद्भिः– स्थूलसूक्ष्माभिमानिभिः विश्वादिजीवैः वरेण्यमुपास्यम्। कुतः विज्ञानात् – जीवात्। 'यो विज्ञाने तिष्ठन्' (बृहदारण्यक ३. ८. २१.) इति श्रुतेर्विज्ञानशब्दस्य जीवपरत्वात्। परमधिकं भिन्नमित्यर्थः। वस्तुतो जीवाभिन्नत्वे उपास्योपासकभावासंभवात्। अत एवोक्तं भगवता बादरायणेन 'अधिकं तु भेदनिर्देशात्।' (ब्र. सू. २. २. २२) इति। पुनस्तदेव प्रजानां ब्रह्मविष्ण्वादिजीवानां वरिष्ठं गुरुबोधितपरविद्यार्थानुसंधानसाधनसाध्यत्वेन वरतमं फलरूपत्वात्। स्वेतरांगोपांगसहित लिंगस्थलानां स्वस्मिन् सामरस्यात्। तस्यैव सर्वैरभ्यर्थनीयत्वाच्च। तदेव महालिंगं वरिष्ठं नान्यदित्यर्थः। परव्याख्याने सन्निहितगुहाचरशब्दयोरर्थान्तराभावात्पौनरुक्त्यं दुर्वारम्॥ १॥

मूलम्—

यदर्चिमद्यदणुभ्योऽणु च यस्मिन्
लोका निहिता लोकिनश्च ।
तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः । तदेतत्
सत्यं तदमृतं तद्वेद्धव्यं सौम्य विद्धि ॥ २ ॥

किंच यत् परशिवब्रह्म अर्चिमत् – सर्वप्रकाशकं 'तस्य भासा सर्वमिदं विभाति' इति वक्ष्यमाणत्वात्, यत् – परशिवब्रह्म, अणुभ्यः – सूक्ष्मेभ्यः अणु – सूक्ष्मम् । 'तस्याः शिखाया मध्ये तु परमात्मा व्यवस्थितः ।' इति श्रुतेः । चकाराद्यत् स्थूलेभ्यः पृथिव्यादिभ्यः स्थूलम् । 'अणोरणीयान् महतो महीयान्' इति श्रुतेः । यस्मिन् लोका–भूरादयः, लोकिनश्च–लोकनिवासिनो मनुष्यादयश्च । चकारः समुच्चयार्थकः । निहिताः – स्थिताः । तदेतदक्षरं ब्रह्म – परशिवमहालिंगम् । स तन्महालिंगमेव प्राणप्रेरकत्वात् प्राणः – प्राणलिंगमित्यर्थः । 'प्राणस्य प्राणम्' इति श्रुत्यन्तरात् । तदु–तदेव वाक्–वाक्प्रेरकत्वात् वाक्प्रसादलिंगमित्यर्थः । 'श्रोत्रवाचोर्न भेदोऽस्ति' इत्यनुभवसूत्रोक्तेः । श्रोत्रांगप्रसादलिंगस्यैव वागंगत्वात् । तदु - तदेव मनः – मनःप्रेरकत्वात् महालिंगम् । मनोंगत्वान्महालिंगस्य । 'श्रोत्रस्य श्रोत्रं मनसो मनः यद्वाचो ह वाचं स उ प्राणस्य प्राणः चक्षुषश्चक्षुः' (केन. १. २.) इति श्रुत्यन्तरात् ।

तत् – महालिंगम् । एतत् – बाह्यान्तःकरणाङ्क प्रसादादि-लिंगरूपम् । सत्यं – त्रिकालाबाध्यं, सद्रूपं भावलिङ्गम् । तत्–तदेव, अमृतं – आनन्दरूपमिष्टलिंगम् । 'सद्रूपं भावलिंगं स्यात् चिद्रूपं प्राणलिंगकम् । आनन्दरूपमाचार्यैरिष्टलिंग-मुदाहृतम् ॥' इत्यनुभवसूत्रोक्तेः । तदक्षरं परशिवमहालिंगं वेद्धव्यम् । दृङ्मनोभावैर्भावयितव्यम् । बहिर्लक्ष्ये इष्टलिंगे दृष्टिस्थैर्यम् । अन्तर्लक्ष्यप्राणलिंगे भावलिंगे च मनोभाव-स्थैर्यं च कर्तव्यमित्यर्थः । सौम्य – हे प्रियदर्शन, विद्धि – इत्थमुपासनं कुरु ॥ २ ॥ अन्तर्लक्ष्यवेधनक्रममेवाह—

धनुर्गृहीत्वौपनिषदं महास्त्रं
शरं ह्युपासानिशितं सन्दधीत ।
आयम्य तद्भावगतेन चेतसा
लक्ष्यं तदेवाक्षरं सौम्य विद्धि ॥ ३ ॥

'धनुः' इति धनुश्चापं, औपनिषदं – उपनिषत्सु प्रसिद्धं प्रणवरूपं पंचाक्षरकल्पद्रुमबीजम् । तस्याकारादि-पंचावयवघटितत्वात् । महास्त्रं – महायुधं गृहीत्वा – गुरु-मुखादादाय, तस्मिन् उपासानिशितं – शिवदीक्षासंस्कार-संस्कृतमत एव त्रिपुट्यनुसन्धानलक्षणलिंगांगसामरस्यध्या-नेन निशितं मलत्रयविभक्तं शुद्धं परमात्मरूपं 'नारुद्रो

रुद्रमर्चयेत्' 'शिवो भूत्वा शिवं यजेत्' इत्यादिश्रुतेः। लिंगधारणात्मक शिवदीक्षासंस्काराभावे शिवार्चन शिवोपासनादावधिकाराभावात्। 'नाशिवस्य शिवोपास्तिर्घटते जन्मकोटिभिः।' इत्यनुभवसूत्रोक्तेः। सन्दधीत – सन्धानं कुर्यात्। किं कृत्वा सन्धानं कुर्यादित्यत्राह, 'आयम्य तद्भावगतेन चेतसा' इति तस्य भावः। शिवोऽहमस्मीति शिवसत्ताविषयकः पराहन्तामयः स्वरूपानुभवः। तं गतेन समाविष्टेन चेतसा – चित्तेन पराहन्तामयचिच्छक्त्यात्मक भावहस्तेनेत्यर्थः। आयस्य–आकृष्य, हस्तस्य धनुराकर्षणहेतुत्वस्य प्रसिद्धत्वात्। प्रवृत्तिमार्गे प्रणवमयहृदयस्यैव भावादि चित्तान्त हस्तषट्करूपत्वात्। निवृत्तिमार्गे चित्तादिहस्तपंचकस्य भावहस्तरूपत्वात्। तस्य परशिवमहालिंगरूपत्वात्। हस्ताभावे बाह्यधनुराकर्षणस्यानुपपन्नत्वात्। तस्य हस्तेनेव अन्तः प्रणवमय हृदयधनुराकर्षणमप्यन्तर्हस्तकरणकं वक्तव्यमतस्तत्प्रदर्शनार्थमुक्तम्। 'तद्भावगतेन चेतसा' इति। प्रसिद्धश्चायमाशयो वीरशैवीयषट्स्थलसिद्धान्ते। सौम्य – हे प्रियदर्शन शिष्य, तदेवाक्षरं – परशिवलिंगमेव लक्ष्यं विद्धि – जानीहि। पृथिव्याद्यंगो भक्तादिः श्रद्धादिभक्त्या मौर्व्या चित्तादिहस्तेन स्वपदार्थजातमाचारादि लिंगमुखेषु समर्प्य ततः ऐक्यस्थलापन्नस्सन् समरसभक्त्या भावहस्तेन शरत्वेन रूपितस्य

शुद्धात्मनोऽप्यर्पणमभिहितमनेनेति बोध्यम् ॥ ३ ॥

उक्तधनुरादिकमेवाह—

प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥ ४ ॥

'प्रणवो धनुः' इति प्रणव एव धनुरिष्वसनम् । 'ओमित्यात्मानं युंजीत' इति श्रुतेः । 'चिच्छक्तियुक्तस्य महालिंगस्य समरसभक्त्या सद्भावहस्तेन तृप्तिपदार्थं धृत्वा प्रणवमन्त्रमनुस्मरन् मनोमुखे समर्प्य तत्प्रसादतृप्तस्सन् परिणामी भवति ।' इति स्वप्रभानन्दशिवाचार्योक्तेश्च । प्रणवमन्त्रार्थानुस्मरणस्य शररूपात्मसमर्पणहेतुत्वात् । प्रणवस्य धनुष्ट्वेन रूपणम् । शरो हि – इषुरेव, आत्मा – शुद्धात्मा, आत्मरूपशरस्य अशुद्धिरूपमलसद्भावे लक्ष्यरूपमहालिंगवेधनात्मक समावेशासंभवात् । दीक्षात्रयविगलितमलत्रयवत्त्वरूपशुद्धिरात्मनो महालिंगप्रवेशोपयोगित्वात् । ब्रह्म – परशिवमहालिंगं तल्लक्ष्यं, तस्य शरत्वेन रूपितस्यात्मनः लक्ष्यं शरव्यं तद्रूपमुच्यते षट्स्थलतत्त्वज्ञानिभिः । अप्रमत्तेन – प्रमादशून्येन । प्रमादश्च – बाह्यनश्वरविषयविषयकश्रद्धा, निष्ठा, अवधान, अनुभव, आनन्द समरसमोहरूपः । तद्रहितेन अंतराधारादिगताचारादिलिंगश्रद्धादिभक्तिज्ञानयुक्तेनेत्यर्थः । 'श्रद्धाभक्तिध्यानयोगादवेहि' इति श्रुतेः ।

'प्रमादोऽनवधानता' इत्यमरवाक्यात् । अप्रमत्तशब्दस्य सावधानत्वभक्तिवाचकस्यापीतरभक्त्युपलक्षकत्वात् । वेद्धव्यं – उक्तब्रह्ममहालिंगं लक्ष्यम् । तद्वेधनानन्तरं 'शरवत् तन्मयो भवेत्' शरस्य लक्ष्यप्रवेशानन्तरं लक्ष्यत्वेनैव यथा प्रतीयमानत्वं तथा शुद्धात्मनोऽपि महालिंगप्रवेशानन्तरं महालिंगत्वेनैव प्रतीयमानत्वं भवतीत्यर्थः । 'शिव एको ध्येयः शिवंकरः सर्वमन्यत्परित्यज्य' इति श्रुतेः । 'कीटो भ्रमरयोगेन भ्रमरो भवति ध्रुवम् । मानवः शिवयोगेन शिवो भवति सर्वदा ॥' इति स्मृतेश्च । भ्रमद्भ्रमरचिन्तायां कीटोऽपि भ्रमरायते । शिवचिन्तासमाक्रान्तः शिवरूपी भवेद्ध्रुवम् ॥' इति वीरागमवचनाच्च ।

गुरुमुखात् स्थूलपंचाक्षरबीजप्रणवश्रवणं धनुर्ग्रहणं । गुरूपदेशानुसारेण तदर्थानुसन्धानं धनुषि शरसन्धानम् । अनुसन्धानाभ्यासो धनुरायमनम् । चित्तस्य शिवभावाकारपरिणामो हस्तः । श्रद्धादिभक्तिर्ज्या । अंगस्य महालिंगे सामरस्यात्मकसमाधिः लक्ष्यवेधः । तन्मयत्वं च पुनः स्थूलाद्यंगाभिमानानुदयेन भक्ताद्यंगानां महालिंगैक्यम् । यद्यप्यायमनकरणं हस्तादिकं कण्ठतो नोक्तं, तथापि हस्तादेरभावे आयमनस्यानुपपन्नत्वात् । तस्यावश्यं वक्तव्यत्वात् । 'तद्भावगतेन चेतसा' इति । 'अप्रमत्तेन इति च तृतीयांतपदेनाभिप्रेतमिति मन्तव्यम् ॥ ४ ॥

अक्षरपरशिवमहालिंगसमावेशमेवाह—

यस्मिन् द्यौः पृथिवी चान्तरिक्ष-
मोतं मनः सह प्राणैश्च सर्वैः ।
तमेवैकं जानथात्मानमन्या
वाचो विमुञ्चथ अमृतस्यैष सेतुः ॥ ५ ॥

'यस्मिन्' इति । यस्मिन् – परशिवमहालिंगे, द्यौः – स्वप्रकाशताशक्तिः । पृथिवी अन्तरिक्षं च, ओतं–समर्पितम् । चकारेणानुक्त जलादिभूतग्रहणम् । चकारस्यानुक्त समुच्चयार्थकत्वात् । परशिवमहालिंगस्यैवाधारादिस्थानभेदेनाचारादिलिंगरूपत्वात् । महालिंगे स्वप्रकाशताशक्तेः । आचारलिङ्गादिरूपे महालिंगे पृथिव्यादेश्च समर्पणं च प्रसिद्धं वीरशैवशास्त्रे । तदुक्तमनुभवसूत्रे 'आचारायार्पिता पृथ्वी गुरोरापः समर्पिताः। शिवाय चार्पितं तेजश्चराय मरुदर्पितः॥ प्रसादायार्पितं व्योम जीवात्मा महतेऽर्पितः ॥' इति । सह प्राणैश्च सर्वैः – बाह्यान्तःकरणैः सहितं मनश्च यस्मिन् षट्स्थलपरब्रह्मणि महालिंगे, ओतं – समर्पितम् । उक्तं च रेणुकभगवत्पादाचार्यैः 'करणैः सहितं प्राणं मनस्याधाय संयमी । योजयेत्स शिवः साक्षाद्यत्र नास्ति जगद्भ्रमः ॥' (सि. १७. ९.) इति । तमेव – सर्वभूतभौतिकाद्यधिष्ठानं,

एकं – अद्वितीयं, 'एक एव रुद्रो न द्वितीयाय तस्थौ' इति श्रुतेः। आत्मानं – परशिवम्। 'प्रपंचोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते। स आत्मा स विज्ञेयः।' (माण्डूक्य. ७.) इति श्रुतेः। 'द्युभ्वाद्यायतनं स्वशब्दात्' (ब्र. १. ३. १.) इति सूत्रेण बादरायणेन परशिवब्रह्मण्ये-वात्मशब्दप्रयोगस्य दर्शितत्वात्। जीवस्य द्युपृथिव्यंतरिक्ष-मनःप्राणाद्यधिष्ठानत्वासंभवात्। जानथ – परविद्यया स्व-सामरस्येनावगच्छत। हे दीक्षिताः शिष्या यूयं अन्याः – षट्स्थलब्रह्मपरभिन्नाः वाचः – पशुधर्मपरवाचः पूर्वकाण्ड-वेदभागानित्यर्थः। 'जपः पंचाक्षराभ्यासः प्रणवाभ्यास एव वा। रुद्राध्यायादिकाभ्यासो न वेदाध्ययनादिकम्॥' इति रेणुकभगवत्पादोक्तेः। विमुंचथ – परित्यजत। कुतः 'अमृतस्यैष सेतुः'। यतः एषः – षट्स्थलपरपरविद्यारूपो महामन्त्रः स्वश्रवणमनननिदिध्यासनद्वारा अमृतस्य-मोक्षस्य सेतुः। सेतुरिव संसारमहासागरपारगमनरूपस्य मोक्षस्य प्राप्तेरुपायस्तत इत्यर्थः। 'यथा तदक्षरमधिगम्यते' इति पूर्वमेवोक्तत्वात्। पंचार्थयोगसंपन्नो दुःखान्तं लभते सुधीः' (लैंग. अ. ८७. ४८.) इति पुराणोक्तेः॥ ५॥

किंच, मूलम्—

अरा इव रथनाभौ संहता यत्र नाड्यः।
य एषोऽन्तश्चरते बहुधा जायमानः।

ओमित्येवं ध्यायथ आत्मानं
स्वस्ति वः पाराय तमसः परस्तात् ॥ ६ ॥

'अरा इव' इति । अरा इव रथनाभौ – रथस्य नाभौ मध्यवर्तिकाष्ठविशेषे अराः – तिर्यक्प्रसारितकाष्ठ-विशेषा इव यत्र – हृदये, नाड्यः संहताः – संलग्नाः, तत्रान्तः – हृदयमध्ये, स एष उक्तः परमात्मा शिवः चरते - चरति । भक्तध्यानाद्यर्थं प्राणलिंगरूपेण वर्तते । कीदृशः सः बहुधा जायमानः ब्रह्मविष्ण्वादिभक्तानुग्रहार्थम् । अप्राकृत-(सोमधार्यादि) पंचविंशतिलीलाविग्रहरूपैः बहुधा – बहुरूपैः जायमानः – आविर्भूयमानः । तं आत्मानं परशिवं, ओमित्येवं – सर्वोपादानप्रणवमय चिच्छक्तिविशिष्टमित्येवमेव ध्यायथ – चिन्तयत । हे शिष्या यूयं स्वसामरस्येन भावयतेत्यर्थः । कस्मै प्रयोजनायेत्यत आह– 'पाराय तमसः परस्तात्' इति । तमसः – मोहमयमायातत्वात् परस्तात् – उपरि शुद्धाध्वनिवर्तमानाय, पाराय – 'पारावारे परार्वाची तीरे' इत्यमरवाक्यात् । पारशब्दस्य प्राप्यस्थानवाचकत्वात् । पयसामर्णव इव भक्ताद्यंगानां प्राप्यस्थानभूताय फलरूप-परशिवमहालिंगसामरस्यायेत्यर्थः । 'ओमित्येवमात्मानं ध्यायथ' इति पूर्वेणान्वयः । एवं तध्यानाभ्यासप्रवृत्तेभ्यो वः युष्मभ्यं स्वस्ति भवत्वित्याचार्य आशास्ते ॥ ६ ॥

'तनुत्रयगतानादि मलत्रयमसौ गुरुः। दीक्षात्रयेण निर्दग्ध्वा लिंगत्रयमुपादिशत् ॥' इत्युक्तप्रकारेण लिंगत्रयमुपदिशति गुरुः —

यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि ।
दिव्ये ब्रह्मपुरेह्येष व्योम्न्यात्मा प्रतिष्ठितः ।
मनोमयः. प्राणशरीरनेता
प्रतिष्ठितोऽन्ने हृदयं सन्निधाय ॥
तद्विज्ञानेन परिपश्यन्ति धीरा
आनन्दरूपममृतं यद्विभाति ॥ ७ ॥

'यः सर्वज्ञ' इति। 'यः सर्वज्ञः सर्ववित्' इत्यस्योक्तोऽर्थः। यस्य परशिवमहालिंगस्य भुवि – भूलोके, एष महिमा – विभूतिः। भक्तानुग्रहार्थं गुरुलिंगजंगमरूपेण इन्द्रियगोचरत्वरूपा। सः – गुरुलिंगजंगमरूपमहत्वान्वितः सर्वज्ञपदवाच्यः। एषः – परशिवः, दिव्ये – द्योतनवति, ब्रह्मपुरे – ब्रह्मण आवासस्थाने योगांगापरनामके कारणांगे वर्तमाने व्योम्नि अन्तर्हृदयाकाशे, प्रतिष्ठितः – स्थापितो मया आचार्येण वेधादीक्षया। तदुक्तमनुभवसूत्रे 'योगांगे भावलिंगन्तु वेधादीक्षाबलेन वै।' इति। तस्मात् हे शिष्य न त्वं कारणशरीररूपाज्ञानमलात्मकोऽसि, किंतु 'तत्त्वमसि'

तदधिष्ठानभूत भावलिंगमेवासीत्यर्थः । पुनरप्याचार्यः सूक्ष्मशरीरे स्थूलशरीरे च तच्छिवलिंगप्रतिष्ठापनमुपदिश... शिष्येभ्यः । यः कारणशरीरगत चिदाकाशे प्रतिष्ठितः स एव मनोमयः – शुद्धमनोग्राह्यत्वात् मनोमयः । किञ्च प्राणशरीरनेता – प्राणश्च शरीरं च तस्य नेता प्रभुः प्राणशरीरव्यापारस्य तदधीनत्वात् तस्य नायक इत्यर्थः । 'अधिभूर्नायको नेता प्रभुः' इत्यमरः । प्राणशरीरव्यापारस्य तदधीनत्वात् तस्य नायक इत्यर्थः । तं प्राणलिंगरूपेण हृदयं – मध्यहृदये सूक्ष्मशरीरस्थिते सन्निधाय – प्रतिष्ठाप्य मन्त्रदीक्षया । ततः अन्ने – अन्नपरिणामे स्थूलशरीरे प्रतिष्ठितः – स्थापित इष्टलिंगरूपेण क्रियादीक्षाबलेन मया आचार्येणेत्यर्थः । 'मन्त्रदीक्षाबलेनैव भोगांगे प्राणलिंगकम् । क्रियादीक्षाबलेनायं देशिकस्तस्य चिद्घनम् ॥ इष्टलिंगं तथा चैव त्यागांगे समयोजयेत् ॥' इत्यनुभवसूत्रोक्तेः । यत् – मया आचार्येण कारणादि शरीरत्रये परशिवब्रह्मभावादिलिंगरूपेण स्थापितं सत् विभाति – प्रकाशते । आनन्दरूपं – सच्चिदानन्दरूपं आनन्दरूपमिति पदमितरसद्रूपचिद्रूपोपलक्षणम् । अमृतं – अनश्वरम् । तत् – परशिवब्रह्मसच्चिदानन्दरूपम् । 'सद्रूपं भावलिंगं स्यात् चिद्रूपं प्राणलिंगकम् । आनन्दरूपमाचार्यैरिष्टलिंगमुदाहृतम् ॥' इत्यनुभवसूत्रोक्तेः । विज्ञानेन विशेषेण लिंगांगसामरस्यविषयकेन ज्ञानेन

अविच्छिन्नतैलधारावदेकाकारवृत्त्यात्मकेन विशेषज्ञानेन ध्यानेनेत्यर्थः। धीराः – लिंगांगसामरस्यज्ञाने रममाणा वीरशैवाः, परिपश्यन्ति – स्वसामरस्येन साक्षात्कुर्वन्ति। तस्माद्यूयमपि तल्लिंगध्यानधारणादिद्वारा साक्षात्कुरुतेत्याचार्यस्याशयः॥ ७॥

तन्महालिंगसाक्षात्कारफलमाह—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे॥ ८॥

'भिद्यते' इति। परावरे – परं निष्कलमवरं च सकलं तदुभयात्मनि तस्मिन् परशिवमहालिंगे षडक्षरमनुरूपपरविद्यावोध्ये 'निष्कलः संविदाकारः सकलो विश्वमूर्तितः। उभयात्मा शिवो मन्त्रे षडक्षरमये स्थितः॥' इति रेणुकभगवत्पादाचार्योक्तेः। यद्वा परं – इन्द्रादिदेवपदापेक्षयोत्कृष्टं कार्यरूपं ब्रह्मविष्ण्वाद्यंगस्थलमवरं निकृष्टं यस्मात् कारणरूपात् आचारादिलिंगस्थलात् इति परावरं, तस्मिन् परविद्यावोध्ये षट्स्थलब्रह्मणीत्यर्थः। तस्मिन् – परशिवमहालिंगे दृष्टे – साक्षात्कृते, अस्मि, प्रकाशे, नन्दामि इति साक्षात्कारे जाते सतीत्यर्थः। अस्य – जीवस्य हृदयग्रन्थिः – 'नाहं शिवः' इत्यज्ञानात्मकाणवमलमयः।

भिद्यते – भिदां नाशमायाति । सर्वसंशयाः – मायीयमलमयाः, छिद्यन्ते – नाशमायान्ति । कर्माणि – कार्मिकमलमयानि प्रारब्धेतराणि, क्षीयन्ते – क्षयमायान्ति । न तु शरीरारम्भकाणि, उपभुज्यमानत्वात् । तदुक्तमनुभवसूत्रे, 'तस्मिन् दृष्टे परे लिंगे निष्कले निरुपाधिके । अस्य जीवस्य कर्माणि क्षीयन्ते सकलानि हि ॥ अविद्याहृदयग्रन्थिर्भिद्यते शतधापि च । संशया बहुसंकल्पाश्छिद्यन्ते च सहस्रधा ॥' इति ॥ ८ ॥

उक्तपरशिवमहालिंगतत्त्वमेवाह—

हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् ।
तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ॥

'हिरण्मय' इति । हिरण्मये – ज्वलत्सुवर्णवद्दीप्यमाने, परे – सर्वाभ्यन्तरे, मायीयकार्मिकमलकारणे कोशे – कोशवदाच्छादके कारणांगे 'परमावरणं मल इह सूक्ष्मं मायादि कंचुकं स्थूलम् । बाह्यं विग्रहरूपं कोशत्रयवेष्टितो ह्यात्मा ।' इति परमार्थसारोक्तेः । विरजं - विगतरजस्कम् । अज्ञानादिमलवर्जितम् । निष्कलं - निरवयवं ब्रह्म - भावलिंगम् । 'निष्कलं भावलिंगं स्यात्' इत्यनुभवसूत्रोक्तेः । विगतरजस्कत्वात् । निष्कलत्वात् । तत् - भावलिंगं, शुभ्रं -

सदा मलरहितम् । न कदापि नित्यशुद्धस्य परशिवलिंगस्य मलपरामृष्टत्वम् । तद्विभक्तस्य तदंशस्यात्मन एव मलावरणसद्भावात् । 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' इति योगसूत्रस्थितेः । ज्योतिषां - सर्वप्रकाशकानामादित्यादीनामपि, ज्योतिः - प्रकाशकम् । यत् - तत्सर्वावभासकं भावलिंगम् । आत्मविदः - षडंगस्थलाभिज्ञाः, 'आत्मैवांगस्थलं भवेत्' इत्यनुभवसूत्रोक्तेः। विदुः-जानन्ति। 'षडङ्गयोगमार्गेण साध्यो विश्वविदव्ययः' इत्यभियुक्तोक्तेः। नत्वितरे वाचनिकज्ञानिनः। 'यदि वाचनिकात् ज्ञानान्मुक्तिः स्याद्भावनां विना। शरीरमानसैर्दुःखैर्मुच्येरन् सर्वजन्तवः॥' इत्यभियुक्तोक्तेः। भक्ताद्यंगस्थलानां साधनरूपत्वात्। यमनियमाद्यष्टांगानां भक्ताद्यंगस्थलान्तर्गतत्वात्। साधनज्ञानाभावे साध्यज्ञानानिष्पत्तेः। सोपानारोहणाभावे सौधारोहणस्यासंभवात् ॥ ९ ॥

कथं तल्लिंगं ज्योतिषां ज्योतिरित्यत आह—

न तत्र सूर्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति ॥ १० ॥

तत्र – तस्मिन् सर्वान्तर्वर्तिनि कारणांगावच्छिन्नात्मप्रतिष्ठिते भावलिंगे, सूर्यः – सर्वप्रकाशकोऽप्यादित्यः, न भाति – न तद्भावलिंगं प्रकाशयति । चन्द्रतारकं – चन्द्रश्च तारकाश्च तेषां समाहारश्चन्द्रतारकम् । न भाति – न प्रकाशयति । इमाः – अतिज्योतिष्ट्वेन प्रसिद्धाः विद्युतः – सौदामिन्यः, न भान्ति – न प्रकाशयन्ति । अयमस्मद्दृष्टिगोचरोऽग्निः कुतः – कथं भासयेत् – न भासयतीत्यर्थः । तमेव – परशिवमेव भान्तं – स्वतः प्रकाशमानं, सर्वमपि सूर्यादिकं जगत् । अनुभाति – अनुदीप्यते । तस्य स्वतः प्रकाशाभावात् । गच्छन्तमनुगच्छतः पुरुषस्य स्वतो गतिरिव तस्यापि स्वतः प्रकाशः । किं न स्यात् इत्यत आह— ‘तस्य भासा सर्वमिदं विभाति’ इति । तस्य – परशिवस्य, भासा – प्रकाशेन, सर्वमिदं सूर्यादिकं जगत्, विभाति – दीप्यते । न स्वतःप्रकाशस्तस्येत्यर्थः । तस्मात् स्वप्रकाशशिवान्तर्गतत्वेन भासमानत्वात् । सर्वं शिवमयमेव । ‘नाप्रकाशः प्रकाशते’ इति न्यायेन प्रकाशवाचि शिवभिन्नत्वे तस्य तुच्छत्वात् । गगनपुष्पादिवत्तस्य सत्त्वैव न स्यात् । तदुक्तमभियुक्तैः । ‘प्रकाशमानं न पृथक् प्रकाशात् । स च प्रकाशो न पृथग्विमर्शात् । नान्यो विमर्शोऽहमिति स्वरूपात् । अहं स्वरूपोऽस्मि चिदेकरूपः ।’ इति । उक्तश्चैतन्मन्त्रार्थो रेणुकभगवत्पादाचार्यैः ‘न सूर्या-

भाति तत्रेन्दुर्नविद्युन्न च पावकः । न तारका महालिंगे द्योतमाने परात्मनि । (सि. १२. ७.) इति ॥ १० ॥

उक्तपरशिवमहालिंगप्रकाशान्तर्गतत्वात् । तस्यैव सर्वावभासकत्वात् । सर्वं चेतनाचेतनात्मकं जगत् परशिव ब्रह्मैव नान्यदित्याह—

ब्रह्मैवेदममृतं पुरस्ताद्
ब्रह्म पश्चात्ब्रह्म दक्षिणतश्चोत्तरेण ।
अधश्चोर्ध्वं च प्रसृतं
ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥ ११ ॥

इति द्वितीयमुण्डके द्वितीयः खण्डः ॥

'ब्रह्मैवेदं' इति । पुरस्तात् अग्रे वर्तमानं वस्तुजातम् अमृतं - आविनाशिरूपं ब्रह्मैव - परशिवब्रह्मस्वरूपमेव, पश्चात् - पृष्ठतो वर्तमानमपि, ब्रह्मैवं, दक्षिणतश्च - दक्षिणतो वर्तमानमपि ब्रह्मैव । उत्तरेण - उत्तरे वर्तमानमपि ब्रह्मैव । अधश्चोर्ध्वं च - अधोदेशे ऊर्ध्वदेशे च ब्रह्मैव । प्रसृतं - व्याप्तम् । किं बहुना इदं विश्वं - दृश्यमानं सर्वं सूर्यादिकं जगत् । वरिष्ठं - सर्वोत्कृष्टं ब्रह्मैव - स्वप्रकाशपरशिव-ब्रह्मैव । शिवप्रकाशेनैव प्रकाशमानत्वात् । न सूर्यादिजगतः

स्वतः प्रकाशः । सर्वस्याप्यचेतितत्वाभावात् । अप्रकाशितत्वे तस्य सत्वाभावात् । "यद्यच्छिवप्रकाशवाह्यं तत्तदवस्तु" इति नियमात् । न भिन्नं परशिवब्रह्मणः किंचित्तस्मात्सर्वं परशिवब्रह्मैवेत्यर्थः ॥ ११ ॥

इति द्वितीयमुण्डके द्वितीयखण्ड वीरशैवभाष्यं
हरगुरुचरचरणार्पितं भूयात् ।



अथ तृतीयमुण्डके प्रथमः खण्डः ।

श्रीगुरूपदिष्टपरविद्याख्य प्रणवसहित पंचाक्षरमहामन्त्रार्थानुसन्धानाभ्यासदाढर्यसमुदितलिंगांगसामरस्यसाक्षात्कारानन्तरभावि लिंगांगयोः पारमार्थिक्यभेदरूपं सामरस्यमुक्तमिदानीं तत्साक्षात्काराभावे तयोर्भेदमपि पारमार्थिकमाह—

द्वा सुपर्णा सयुजा सखाया
समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्ति
अनश्नन्नन्यो ऽभिचाकशीति ॥ १ ॥

'द्वासुपर्णा' इति । द्वा सुपर्णेत्यादौ द्विवचनस्याकारश्छान्दसः । द्वा - द्वौ, सुपर्णा - सुपर्णौ पक्षिणौ, कीदृशावित्यत आह "सयुजा" इति । सयुजा - सयुजौ सह सामानाधिकरण्येन युजौ - युक्तौ वर्तमानावित्यर्थः । सखाया - सखायौ, सदृशौ किंचिज्ज्ञत्व किंचित्कर्तृत्व सर्वज्ञत्व सर्वकर्तृत्व प्रेर्यत्वप्रेरकत्व पूजकत्व पूज्यत्वादिना परस्परभेदेऽपि ज्ञानक्रियात्मचैतन्येन सामान्यधर्मेण तयोर्भेदाभावात् सदृशरूपावित्यर्थः । एवं भूतौ शिवजीवौ पक्षित्वेन रूपितौ । समानं - एकं, वृक्षं - वृक्षतुल्यं शरीरम् । परिषस्वजाते - आश्रितवन्तौ भवतः । तयोः - पक्षिरूपेणोक्तयोः शिवजीवयोर्मध्ये, अन्यः - शिवादन्यः जीवः, स्वादु - परिपक्वं, पिप्पलं - सुखदुःखात्मकं कर्मफलम् । अत्ति - भुङ्क्ते । स्वकर्मानुसारेण देवतिर्यङ्मनुष्यादि नानायोनिसंजनितस्सन् तत्तज्जात्युचितकर्मफलमनुभवतीत्यर्थः । तदुक्तं रेणुकभगवत्पादाचार्यैः । 'चक्रनेमिक्रमेणैव भ्रमन्ति हि शरीरणः । जात्यायुर्भोगवैषम्यकारणं कर्मकेवलम्' इति । अन्यः - जीवादिभिन्नः शिवः प्रेरयिता । अनश्नन् - कर्मफलमभुंजानस्सन् । अभिचाकशीति - पश्यत्येव केवलम् । तदुक्तं रेणुकभगवत्पादाचार्यैः 'एतेषां देहिनां साक्षी प्रेरकः परमेश्वरः । एतेषां भ्रमतां नित्यं कर्मयन्त्रनियन्त्रणे' उक्तं च सूतसंहितायां द्वौ सुपर्णौ

शरीरेस्मिन् जीवेशाख्यौ व्यवस्थितौ। तयोर्जीवः फलं भुङ्क्ते कर्मणो न महेश्वरः। इति ॥ १ ॥

पुनश्च स जीवः 'चिद्वत्तच्छक्तिसंकोचान्मलावृतः संसारी' इति शक्तिसूत्रोक्तरीत्या घोरापारनिस्सारसंसार-तापत्रयानलदन्दह्यमानो भूत्वा परशिवसाक्षात्कारानन्तरं परमसुखी भवतीत्याह—

समाने वृक्षे पुरुषो निमग्नो
अनीशया शोचति मुह्यमानः।
जुष्टं यदा पश्यत्यन्यमीशं
अस्य महिमानमिति वीतशोकः ॥२॥

'समाने' इति। अनीशया - कर्तुमकर्तुमन्यथा-वा कर्तुं समर्थात् स्वतन्त्रात् ईशाद्भिन्ना चेतनाविर्भूत जडलोमादिवच्छिवाविर्भूता एकोत्तरत्रिंशत्तमत्वेन परि-गणिता भेदबुद्धिरूपा जडा माया। भेदबुद्धिरूपा अस्वतन्त्रा - अनीशा तया मुह्यमानः - मोहमाणवमलमज्ञानमाक्रान्तः सन् तदपहृतैश्वर्यत्वात् किंचित्कर्तृत्व किंचिज्ज्ञत्वादिलक्षण कलाविद्याद्यावृतो तिरोहित स्वशुद्धशिवरूपः पुरुषः पंच-विंशतितम तत्त्वेन परिगणितः जीवनामकः। समाने - एकरूपे, वृक्षे - वृक्षतुल्ये शरीरे शरीरादितादात्म्यापन्नः।

मनुष्योऽहं देवदत्तोऽहं, युवाहं, वृद्धोऽहं, कृशोऽहं, स्थूलोऽहं, क्षुधितोऽहं, तृषितोऽहं, सुखितोऽहं, दुःखितोऽहं, इत्यादि देहप्राणबुद्धितादात्म्यालंबनाभिमानात्मप्रत्ययैरावृतोऽपरिच्छिन्न स्वशक्तिमविज्ञाय पंकनिमग्न पुरुष इव निमग्नो भवति । अत एव शोचति । एकशृंखलाबन्धित कारागृहप्रविष्टपुरुषादप्यधिकं शोचति संतप्यते । मलत्रयशृङ्खलितत्वात् । मलत्रयं च स्थूलसूक्ष्मकारण शरीररूपमेव । तदुक्तं परमार्थसारे 'परमावरणं मलमिह सूक्ष्मं मायादि कंचुकं स्थूलम् । बाह्यं विग्रहरूपं कोशत्रयवेष्टितोह्यात्मा' इति । यदा - यस्मिन् काले, जुष्टं - सन्तुष्टम् । स्वार्चनार्पणार्पितग्रहण वाचकमन्त्रजपतदर्थानुसंधानादिरूपैः पतिकर्मभिः संप्रीतमित्यर्थः । अन्यं - स्वस्मात्पूजकाद्भिन्नमीशं - शिवं, पूज्यम् । वस्तुतः शिवजीवयोर्भेदाभावे पूज्यपूजकभावासंभवात् । तदुक्तं रेणुकभगवत्पादाचार्यैः, 'प्रेरकं शंकरं बुध्वा प्रेर्यमात्मानमेव च । भेदात्तं पूजयेन्नित्यं न चाद्वैतपरो भवेत् ॥' इति । अत्रेशपदस्य 'शम्भुरीशः पशुपतिः शिवश्शूली महेश्वरः ।' इति कोशावगतरूढ्या शिवैकपरत्वात् । न पराभिमत वासुदेवपरत्वं युक्तम् । पश्यति-साक्षात्करोति । शिवभक्तिशिवार्चनाशिवमन्त्रजप तदर्थानुसंधानादिविजृम्भितशिवप्रसादप्रशमितनिखिल -

मलपाशाग्निः सन् 'शिवोऽहं' इति स्वात्मानं शिवमपरोक्षीकरोतीत्यर्थः। किंचास्य महिमानं – विभूतिं, सर्वज्ञत्वादि षडङ्गैश्वर्यं, हरगुरुचररूपां वा पश्यति। इति शिवरूपस्य ममैवायं महिमेति साक्षात्करोति। तदा – तस्मिन् काले, वीतशोकः – अपगतविद्याक्लेशः कृतकृत्यो भवतीत्यर्थः। यावत्पर्यन्तं 'तत्त्वमसि' इति महावाक्यार्थस्य लिंगांग-सामरस्यस्य गुरुबोधितपरविद्यार्थाभिज्ञस्यैव साक्षात्कारो न भवेत् तावत्पर्यन्तं शिवजीवयोर्भेद एवेत्याशयः। तदुक्तं रेणुकभगवत्पादाचार्यैः, 'साक्षात्कृतं परं तत्त्वं यदा भवति बोधतः। तदाद्वैतसमापत्तिर्ज्ञानहीनस्य न क्वचित् ॥' इति। 'क्रियाद्वैतं न कर्तव्यं भावाद्वैतं समाचरेत्।' इत्यागमोक्तेः। 'पदार्थकायः पूजायां भक्तो भक्तिप्रभावतः। प्रसादकायः पूजान्ते पुनः पूजाक्रियावधि ॥' इत्यनुभवसूत्रोक्तेः। शरीर पातपर्यन्तं ज्ञानिनापि पतिकर्माण्यनुष्ठातव्यान्येव न त्यक्तव्यानि। तदुक्तं रेणुकभगवत्पादाचार्यैः, 'ज्ञानेनाचारयुक्तेन प्रसीदति महेश्वरः। तस्मादाचारवान् ज्ञानी भवेदादेहपातनम् ॥' इति। 'ज्ञानामृतेन तृप्तोऽपि योगी धर्मं न संत्यजेत्। आचारं महतां दृष्ट्वा प्रवर्तन्ते हि लौकिकाः ॥' (सि. शि. १६. ७.) इति ॥ २ ॥

उक्तार्थे विशेषधर्ममाह—

यदा पश्यः पश्यते रुक्मवर्णं
कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय
निरञ्जनः परमं साम्यमुपैति ॥ ३ ॥

यदेति । यदा – यस्मिन् काले, पश्यः – परविद्याजन्यलिंगांगसामरस्यज्ञानयोग्योऽधिकारी । रुक्मवर्णं–हिरण्यवर्णम् । 'नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतये अम्बिकापतये उमापतये पशुपतये नमो नमः ।' (महानारायण. अ. २०.) इति श्रुतेः । कर्तारं – परम कर्तारम् । सृष्टिस्थितिबन्धमोक्षरूप पञ्चकृत्यकर्तॄणामपि पर शिवमहालिंगनियम्यत्वात् तेषां सृज्यकोटिप्रविष्टत्वात् । 'ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते ।' (अथर्वशिखा १.) इति श्रुतेः । 'आत्मन आकाशः आकाशाद्वायुः वायोरग्निरग्नेरापः अद्भ्यः पृथिवी' इति श्रुतेश्च । आकाशादेस्तदभिमानि सदाशिवादेरपि परशिवब्रह्मजन्यत्वावगमाच्च । न परमकर्तृत्वं चतुर्मुखादीनाम् । ईशं – चराचरजगन्नियन्तारं शिवम् । ईशपदस्य शिव एव प्रसिद्धत्वात् । पुरुषं – सर्वत्र परिपूर्णं शिवम् । 'तत्पुरुषाय विद्महे महादेवाय धीमहे । तन्नो रुद्रः प्रचोदयात् ।' इति श्रुतेः । ब्रह्मयोनिं – ब्रह्मणां चतुर्मुखादि पञ्चकार्यब्रह्मणां योनिं – जनकम् । पश्यते –

पश्यति स्वसामरस्येन साक्षात्करोति । तदा – तस्मिन् काले निरञ्जनः – निरस्तमललेपः । विद्वान् – स्वात्मशिवज्ञानवान् पुण्यपापे समूले विधूय – निरस्य, परममुत्कृष्टं साम्यं – सारूप्यम् । यद्वा, सायुज्यम् । तेन न ' न तत्समश्चाभ्यधिकश्च दृश्यते ', ' शिवस्वरूपो भवति शिवस्वरूपो भवति ' इति श्वेताश्वतर वृद्धजाबालश्रुत्योर्विरोधः । ' गगनं गगनाकारं सागरः सागरोपमः । रामरावणयोर्युद्धं रामरावणयोरिव ॥ ' इत्यादाविवानन्योपमैवाभेदः साम्यमित्यर्थः । उपैति – प्राप्नोति । नद्योऽब्धाविव परशिवसमुद्रसमरसो भवतीत्यर्थः । अत्र उपैतीत्यनेनोपास्योपासकयोः प्राप्य - प्रापकभावः स्फुटीकृतः । तथा स्कान्दे श्रूयते ' यद्यपि भेदापगमे साम्ब तवाहं न मामकीनस्त्वं, सामुद्रो हि तरंगः क्वचन समुद्रो न तारङ्गः ॥ ' इत्युक्तम् । अत्रेशपदस्य निरुपपदस्य ' शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः । ' इत्यमरकोशेन शिवे योगरूढत्वात् । ' ईशं तं ज्ञात्वा अमृता भवन्ति । ' ' यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥ ' इत्यादि श्रुत्या चेशपदवाच्यत्वस्य मोक्षप्रदत्वस्य च शिवस्यैव प्रतिपादनात् । रुक्मवर्णस्यापि तस्यैव श्रुत्यन्तरे दर्शनाच्च । न ईशपदस्य वासुदेवपरकत्व व्याख्यानं युक्तम् ॥ ३ ॥

प्राणो ह्येष यः सर्वभूतैर्विभाति
विजानन् विद्वान् भवते नातिवादी ।
आत्मक्रीडः आत्मरतिः क्रियावान्
एष ब्रह्मविदां वरिष्ठः ॥ ४ ॥

'प्राणः' इति । किञ्च प्राणः – प्राणलिंगरूप ईश्वरः 'स उ प्राणस्य प्राणः' (केन १ · २), 'प्राणस्य प्राणमुत' (बृह. ४. ४. १८) इति श्रुतेः । एष हि – पूर्वोक्त एव यः परशिवः सर्वभूतैः – सर्वपृथिव्याद्यभिमानिब्रह्मादिभिः सह सामानाधिकरण्येन ब्रह्मादिस्थानेष्वाधारादिषु तदधिष्ठानतया तदुपासनार्थं विभाति – विविधेनाचारादिलिंगरूपेण दीप्यते । तं परशिवं विजानन् – विशेषेण गुरूपदिष्ट परविद्यार्थ-श्रवणमननादिना जानन् । विद्वान् – साक्षात्कुर्वन् अति-वादी – स्वात्मशिवातिरिक्तानतिक्रम्य वदितुं शीलमस्य-सोऽतिवादी भवति । स्वात्मानं शिवं पश्यन् शिवादन्यं न पश्यत्येवातोऽतिवादी न भवते – न भवति । तदुक्तं रेणुकभगवत्पादाचार्यैः, 'नान्यत्पश्यति योगीन्द्रो नान्यज्जा-नाति किंचन । नान्यत् शृणोति संदृष्टे चिदानन्दमये शिवे ॥' इति । किंच आत्मक्रीडः स्वात्मनि शिवे पत्यावेव क्रीडा केलिर्यस्य सः आत्मक्रीडः, न बाह्योद्यानकेलिः । किंच, आत्मरतिः – स्वात्मन्येव पतौ शिवे रतिर्यस्य सः

आत्मरतिः, न बाह्यसत्यां रतिमान् स्वस्याः सत्याः सत्यन्तराभावात् बाह्यसतीसंगं परित्यज्य स्वच्चिच्छक्तिसम्मेलनानन्दतुन्दिल इत्यर्थः । तदुक्तं रेणुकभगवत्पादाचार्यैः, 'सतीव रमणे यस्तु शिवे शक्तिं विभावयन् । तदन्यविमुखः सोऽयं ज्ञातश्शरणनामवान् ॥' इति शिवज्ञाने समुत्पन्ने परानन्दः प्रकाशते । तदासक्तमना योगी नान्यत्र रमते सुधीः ॥' (सि. १३. ५. ११.) इति । 'सती चाहं पतिर्लिङ्गं हृदि युक्तस्स्वयं प्रभुः । प्रापंचिकसुखं नास्ति शरणस्थलमुत्तमम् ॥' इति स्कान्दे शङ्करसंहितोक्तेः । एषः शरणाभिधानः, क्रियावान् – स्वपतिशिवस्वरूपाभेदानुसंधानरूपक्रियावान् । अत एवायं शरणस्थलापन्नः ब्रह्मविदां चतुर्विध परशिवब्रह्मज्ञानिनां मध्ये वरिष्ठः वरतमः अत्यन्तश्रेष्ठ इत्यर्थः । अस्य प्रारब्धकर्मलेपाभावात् ॥ ४ ॥

लिङ्गाङ्गसामरस्यात्मक मोक्षप्राप्तिसाधनान्याह—

सत्येन लभ्यस्तपसा ह्येष आत्मा
सम्यक्ज्ञानेन ब्रह्मचर्येण नित्यम् ।
अन्तश्शरीरे ज्योतिर्मयो हि शुभ्रो
यं पश्यन्ति यतयः क्षीणदोषाः ॥ ५ ॥

'सत्येन' इति । क्षीणदोषाः – कामक्रोधादिदोष-

वर्जिताः । यतयः – जितेन्द्रियाः शरणस्थलारूढा इत्यर्थः । शरीरे – शिवागाररूपे । अन्तः – हृदयपुण्डरीकमध्ये । यं – चिदाकाशरूपेण प्रकाशमानं शिवं, पश्यन्ति – स्वाभेदेन साक्षात्कुर्वन्ति । तदुक्तं रेणुकभगवत्पादाचार्यैः, 'शिवा-गारमिदं प्रोक्तं शरीरं बोधदीपितम् । षट्त्रिंशत्तत्त्वघटितं सुमनः पद्मपीठकम् ॥ पराकाशस्वरूपेण प्रकाशः परमेश्वरः । हृदाकाशगुहालीनो दृश्यतेऽन्तः शरीरिणाम् ॥' इति । स एषः पूर्वोक्तः ज्योतिर्मयः प्रकाशरूपः हि – प्रसिद्धः, शुभ्रः – नित्यनिर्मलः परशिवः । नित्यमित्यस्य तृतीयान्त सत्यादि पदचतुष्टयेनान्वयः । तथा हि नित्यं – सत्येन – भूतहितयथार्थवचनेन । लभ्यः – प्राप्तव्यः । नित्यं – तपसा - शिवपूजार्थं सामग्रीसंपादने शरीरसंशोषणरूपेण । लभ्यः इत्यनुषङ्गः । नित्यं सम्यज्ज्ञानेन – साधनसहित लिंगांग - सामरस्यज्ञानेन लभ्यः । तदुक्तं नीलकण्ठशिवाचार्येण, 'लिंगांगयोः सामरस्यं जीवब्रह्मैक्यलक्षणम् । तदपि द्विविधं प्रोक्तं साधनेन समन्वितम् ॥ द्वितीयं तद्विनिर्मुक्तमाद्यं गुरूक्तं पुरा । द्वितीयमपि शिष्यस्य गुरुवाक्यस्य पालनात् ॥ आद्यं वेधादिदीक्षाभ्यः त्रिपुण्ड्रस्यापि धारणात् । रुद्राक्ष-धारणाच्चापि पंचाक्षरजपादपि ॥ मुख्यालिङ्गधृतेश्चापि दहराकाशमण्डले ॥ बहिर्देहरदेशे च हृदये लिंगधारणात् ॥'

(क्रियासार. उ. १९.) नित्यं - ब्रह्मचर्येण - अष्टविधमैथुनत्यागेन लभ्यः ॥ ५ ॥

उक्तसाधनेषु सत्यं स्तौति—

सत्यमेव जयते नानृतं
सत्येन पन्था विततो देवयानः ।
येनाक्रमन्त्यृषयो ह्याप्तकामा
यत्र तत्सत्यस्य परमं निधानम् ॥ ६ ॥

'सत्यमेव' इति । सत्यमेव - लोके यथार्थभाषणवानेव । जयते - जयत्यनृतवादिनम् । नानृतं - अनृतवादी न जयतीति प्रसिद्धम् । शास्त्रेऽपि सत्यस्य प्रकृष्टत्वं प्रसिद्धमित्याह । 'सत्येन' इति । सत्येन - यथाभूतार्थकथनेन । देवयानः - देवयानाख्यः, पंथाः - मार्गः, विततः - सातत्येन प्रवृत्तः । येन पथा । ऋषयः - तत्त्वदर्शिनः । आप्तकामाः । विगततृष्णास्सन्तः । आक्रमन्ति - आक्रमन्ते, हि - प्रसिद्धम् । आक्रमणस्थानमाह । 'यत्र' इति । यत्र - यस्मिन् - सत्यस्य साधनस्य सम्बधि साध्यम् । परमं - परमप्रयोजनभूतम् । निधानं - भूगतनिधिरिव पराशिवब्रह्म वर्तते । तत्स्थानं चिदम्बरशक्तिरूपमहाकैलासस्थानमित्यर्थः ॥ ६ ॥

सत्यादिसाधनसाध्यस्य परशिवब्रह्मणो दुर्ज्ञेयत्वात् पुनरपि सत्यस्वरूपमाह—

बृहच्च तद्दिव्यमचिन्त्यरूपं
सूक्ष्माच्च तत्सूक्ष्मतरं विभाति ।
दूरात्सुदूरे तदिहान्तिके च
पश्यत्स्विहैव निहितं गुहायाम् ॥ ७ ॥

'बृहच्च' इति । तत् – प्रकृतं परशिवं ब्रह्म, बृहत् - महत् महालिंगमित्यर्थः, आकाशादेरप्याधारत्वात् । दिव्यं – दिवि स्वप्रकाशतामय चिच्छक्तिवपुषि वर्तमानं, अचिन्त्य-रूपं – चिन्तयितुमशक्यमचिन्त्यं रूपं यस्य तदचिन्त्यरूपम् । ब्रह्मणः सच्चिदानन्दरूपस्येयत्तापरिच्छेदस्याभावात् । अपरि-मेयरूपमित्यर्थः । न त्वचिन्त्यरूपमित्यनेन वाङ्मनसातीतत्वेन ब्रह्मणो निर्विशेषत्वं प्रतिपाद्यते । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।' इति श्रुतेः वाङ्मनसातीतत्वप्रति-पादकत्वाभावात् । तत् प्रतिपादकत्वे 'आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन' इत्युत्तरश्रुतेरसांगत्यापत्तेः । न हि वाङ्मनोऽतिरिक्तमानगम्यत्वं ब्रह्मणि संभवति । ब्रह्मणि मानान्तराप्रवृत्तेः । 'नावेदविन्मनुते तं बृहन्तं नैषा तर्केण मतिरापनेया ।', 'मनसैवानुद्रष्टव्यम् ।' (बृह. ४.४.१९.)

इत्यादिश्रुतिविरोधाच्च । तस्मात् ब्रह्मरूपस्येयत्तापरिच्छेदाभावात् । अपरिमेयरूपत्वमुक्तमचिन्त्यपदेन । न तु वाङ्मनसातीतत्वम् । तादृशमप्यपरिमेयानन्दादिरूपं यो वेत्ति, शुद्धचित्तेन स कुतश्चन न बिभेतीति शुद्धचित्त चिन्त्यत्वमुच्यते ब्रह्मानन्दादेः । किञ्च तत् – परशिवब्रह्म, सूक्ष्मात् – अणुरूपाच्छिवादपि सूक्ष्मतरमत्यन्तसूक्ष्मं तदन्तरेऽपि प्रवेशात् । 'नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा । नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा । तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः ॥' (महानारायण. ११.) इति श्रुत्यन्तरे । 'तस्याः' इति तत्पदेन जीवस्योपदिष्टत्वात् । विभाति – दीप्यते । दूरात्सुदूरे - श्रद्धादिभक्तिरहितानामत्यन्तदूरदेशे वर्तते भक्तिरहितैरप्राप्यत्वात् । 'भक्त्या लभ्यस्त्वनन्यया' इति कृष्णेनापि गीतत्वात् । तत् - परशिवब्रह्म, इह - अस्मिन् शरीरे, अन्तिके च – श्रद्धादिभक्तियुक्तानां समीप एव वर्तते । शरीराभ्यन्तर वर्तमानाधारादि स्थानेष्वाचारादि लिङ्गरूपेण सन्निहितत्वात् । तत्कथमनुभूयते इत्यत आह । 'पश्यत्स्विहैव' इति । इहैव - अस्मिन् शरीर एव, गुहायां - शुद्धात्मरूप हृद्गुहायाम्, निहितं – स्थापितम्, चित्कलामयपरशिवलिंगम् । पश्यत्सु – साक्षात्कुर्वत्सु सत्सु समीपस्थत्वमनुभूयते । तदुक्तमनुभवसूत्रे,— 'स बाह्याभ्यन्तरं साक्षाल्लिंगं ज्योतिः परं स्वकम् । तिले तैलमिवाभाति ह्यरण्यामिव

पावकः ॥ क्षीरे सर्पिरिव स्रोतस्यम्बुवत् स्थितमात्मनि । तद्भावलक्षणां भक्तिं सुसूक्ष्मां परमामपि । दर्शयामास शिष्यस्य देशिकः परमेश्वरः ॥' इति । गुरूपदिष्टपरविद्याघटक नकारादिमयाचारादि लिङ्गाधिकरण पातंजलोक्ताष्टांगयोगगर्भषडंगयोगाभ्यासदार्ढ्यं समुदित शिवप्रसादप्रशमिते मलत्रये स्वसमीपे स्वात्मन्येव स्वात्मानं शिवं पश्यत्सु सत्सु शिवयोगिषु तेषां स्वसमीपस्थत्वस्यानुभववेद्यत्वात् ॥७॥

मुख्यं तद्दर्शनोपायमाह—

न चक्षुषा गृह्यते नापि वाचा
नान्यैर्देवैस्तपसा कर्मणा वा ।
ज्ञानप्रसादेन विशुद्धसत्वः
ततस्तु तं पश्यते निष्कलं ध्यायमानः ॥८॥

'न चक्षुषा' इति । पूर्वोक्तं परशिवलिङ्गं चक्षुषा - चक्षुरिन्द्रियेण । न गृह्यते - न चाक्षुषप्रत्यक्षविषयं भवति । नीलपीतादिरूपरहितत्वात् । भावग्राह्यत्वात् । निष्कलत्वाच्च । नापि वाचा - पशुकर्मपर वाचा, पूर्वकाण्डवेदभागेनेत्यर्थः । न गृह्यते - न तज्जन्म ज्ञानविषयं भवति । परविद्यानुकूल - ज्ञानकाण्डेन वेदभागेन गृह्यमाणत्वात् । अन्यैर्देवैरन्यैरिन्द्रियैरपि न गृह्यते निष्कलत्वात् । तपसा - प्रसिद्धेन कृच्छ्रादि-

रूपेण । कर्मणा वा – पशुकर्मणा च । न गृह्यते – नोपलभ्यते । किन्तु निष्कलं – हेयाः, कलाः – धरादि - मायान्ततत्त्वभागाः स्थूलसूक्ष्मपरशरीरत्रयात्मकमलत्रयगताः तैर्विरहितं भावलिङ्गम् । ‘भावग्राह्यमनीडाख्यं भावाभावकरं शिवम् । कलासर्गकरं देवं ये विदुस्ते जहुस्तनुम् ॥’ (श्वे. ५-१४) इति श्रुतेः । ‘निष्कलं भावलिंगं स्याद्भावग्राह्यं परात्परम् ।’ इत्यनुभवसूत्रोक्तेः । ध्यायमानः -ध्यायन् तद्ध्यानबलेनाभिमुखीकृतं परशिवलिंगं यदा प्रसीदति तदा ज्ञानप्रसादेन – अत्र ज्ञानपदेन ज्ञायते अनेन श्रुत्यादिनेति व्युत्पत्त्या, ‘चिन्मात्रोऽहं सदाशिवः’, ‘अचिन्त्यं चाप्रमेयं च यत्सूक्ष्मात्सूक्ष्मतरं ज्ञानं तन्मे मनः शिवसंकल्पमस्तु ।’ इत्यादिश्रुत्या च परशिवलिंगमेवोच्यते । ‘तद्भावज्ञापकं ज्ञानं लयं यत्र समश्नुते । तद्ज्ञानलिंगमाख्यातं शिवतत्त्वार्थकोविदैः ॥’ इति श्रीरेणुकभगवत्पादाचार्योक्तेः । शिवयोगिनां ज्ञानवृत्तेरपि परशिवलिङ्गविलीनत्वात् । ज्ञानपदेन ज्ञानाश्रयं वा चिद्रूपपरशिवलिङ्गं लक्ष्यते । तस्य प्रसादेन शुद्धसिद्धप्रसिद्धरूपेण । विशुद्धसत्वः – परिशुद्धचित्तः - ‘आहारशुद्धौ सत्वशुद्धिः सत्वशुध्या ध्रुवा स्मृतिः । स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः’ इति श्रुतेः । ‘अन्नशुध्या हि सर्वेषां सत्वशुद्धिरुदाहृता । विशुद्धमन्नजातं हि यच्छिवाय निवेदितम् ॥ तदेव सार्वकालन्तु भुञ्जानो लिङ्गतत्परः । मन-

प्रसादमतुलं लभते ज्ञानकारणम् ॥' [सि. ११-९-१०] इति रेणुकभगवत्पादोक्तेः। चित्तस्य परिशुद्धिश्च चितिसङ्कोचरूपप्रकृत्यपरपर्यायचित्तरूपतापरित्यागेन चितिशक्तिरूपेणावस्थितिः। तदुक्तं शक्तिसूत्रे—'चितिरेव चेतनपदादवरूढा चेतन्यसङ्कोचिनी चित्तम्' ॥ 'तत्परिज्ञाने चित्तमेवांतर्मुखीभावेन चेतनपदाध्यारोहाच्चेति' [प्र. ह्र. ५·१३] इति। ततस्तु परिशुद्धाच्चितिरूपात्तु तं - शिवं पश्यते शिवत्वं प्राप्य शिववत् 'अस्मि, प्रकाशे, नन्दामि' इति सच्चिदानन्दरूपं पश्यति – साक्षात्करोतीत्यर्थः। तदुक्तं रेणुकभगवत्पादाचार्यैः 'शम्भोः शिवप्रसादेन संसारच्छेदकारिणा। मोहग्रन्थिं विनिर्भिद्य मुक्तिं यान्ति विवेकिनः' [सि. १८, ४] इति ॥ १७ ॥

कारणाङ्गावच्छिन्नात्मप्रतिष्ठितं निष्कलभावलिङ्गोपलब्ध्युपाय उक्त इदानीं सूक्ष्मांगावच्छिन्नात्मप्रतिष्ठित प्राणालिंगोपलब्धिसाधनमाह—

एषोऽणुरात्मा चेतसा वेदितव्यो
यस्मिन् प्राणः पञ्चधा संविवेश।
प्राणैश्चित्तं सर्वमोतं प्रजानां
यस्मिन्विशुद्धे विभवत्येष आत्मा॥ ९ ॥

'एषोऽणुः' इति। यस्मिन् प्राणलिंगे। पंचधा—प्राणापानसमानव्यानोदानरूपेण विभक्तः। प्राणः-प्राणवायुः। संविवेश-समाविवेश विलीन इत्यर्थः। तदुक्तं रेणुकभगवत्पादाचार्यैः—'प्राणो यत्र लयं याति भास्करेन्दुविघट्टनात् तत्प्राणलिंगमुद्दिष्टं तद्धारी स्यात्तदाकृतिः॥' इति। उक्तं च शिवयोगप्रदीपिकायां, 'चराचरलयस्थानं लिंगमाकाश संज्ञकम्। प्राणे तद्योम्नि संलीने प्राणलिंगी भवेत्पुमान्॥' इति। यस्मिन्-प्राणलिंगे प्रजानां-साधनसम्पन्नानां जनानां सर्वं-चित्तं प्राणैश्चक्षुरादीन्द्रियैः सह ओतं समर्पितं विलीनम्। विकल्पक्षय, शक्तिसंकोच, विकास, वाहच्छेदाद्यन्तकोटि निभालनादि साधनैः प्राणविलये चित्तस्यापि विलयसम्भवात्। मनोमारुतयोर्जीवपक्षिणः पक्षरूपत्वात्। तस्मिंश्चित्ते चिद्रूप प्राणलिंगविलीने अत एव विशुद्धे चिच्छक्तिरूपमापन्ने सति। एषः-स एष आत्मा-प्राणलिंगरूपः। अणुः-उपासनार्थं परिच्छिन्नः। 'अर्भकौकस्त्वात् तद्व्यपदेशाच्चनेति चेन्न निचाय्यत्वादेवं व्योमवत्' (ब्र. अ. १. ७) भगवता बादरायणेन उपासनार्थं परशिवब्रह्मणः परिच्छिन्नवत्वस्योपदिष्टत्वात्। 'उपासनार्थमन्तस्थं परिच्छिन्नं स्वमायया' इति रेणुकभगवत्पादाचार्यैरप्युपदिष्टत्वात्। चेतसा शुद्धेनचिच्छक्तिरूपेण। वेदितव्यः-साक्षात्कर्तव्यः। 'मनसैवानुद्रष्टव्यम्' (ब्र. ४.४. १९) इति श्रुतेः। 'प्राणलिंगं मनोग्राह्यं' इत्यनुभवसूत्रोक्तेः-

'कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्' (कठ. ४. १. २) इति श्रुतेः ॥

विशुद्धचित्तानामपरोक्षीकृतशिवतत्वानां शिवयोगिनां स्वसत्यसङ्कल्पानुसारेण स्वाभीष्टफलप्राप्तिः स्वभक्ताभीष्टफलप्रदानशक्ति श्चाविर्भवतीत्याह–

यं यं लोकं मनसा संविभाति
विशुद्धसत्वः कामयते यांश्च कामान् ।
तं तं लोकं जयते तांश्च कामां-
स्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः ॥ १० ॥

इति तृतीयमुण्डके प्रथमःखण्डः

'यं यं' इति । यं यं लोकं—पातालादि शिवलोकांतं लोकं मनसा—शुद्धचित्तेन संविभाति—संकल्पयति स्वशरीरराज्य ग्राममन्दिरपरिवारादिभिस्सह प्राप्तुं स्वभक्तान् प्रापयितुं वा इच्छतीत्यर्थः । यांश्च कामान् भोग्यान् विषयान् वा कामयते—इच्छति । विशुद्धसत्वः—शुद्धचित्तः । तं तं लोकं—सर्वोर्ध्वं शिवलोकान्तम् । तांश्च कामान्–तादृशान् विषयान् जयते-जयति वशीकरोतीत्यर्थः । यतोऽयंसत्यसंकल्पो वशीकृतसर्वलोककामः शिवयोगी लोकान् कामान् प्राप्तुं स्वभ-

क्तान्प्रापयितुं च समर्थोभवति तस्माद्भूतिकामः-ऐहिकामुष्मिकैश्वर्याभिलाषी भक्तः आत्मज्ञं हि शिवतत्ववेत्तारं परविद्योपदेष्टारं स्वाभिलषितपलदातारमेवायं मह्यमभिलपितफलं प्रयच्छतीति वुध्या । अर्चयेत् - इष्टलिंगमिव पादप्रक्षालनादिना पूजयेत् । हरगुरुचराणामभिन्नत्वात् । तेषु प्रकर्षापकर्षप्रयुक्त भेदस्याभावात् । तद्भेदकर्तुः प्रत्यवायविधानात् । 'भेदकृत्पापमश्नुते' इति क्रियासारोक्तेः । नन्वत्र शिवयोगिनां शरीरादिभिः सह कथं लोकांतरप्राप्तिः सम्भवतीति चेन्न । सानन्दशतानन्दादीनां नारकीयपापिजनोद्धरणस्य लोकान्तरगमनं विना सम्भवात् अष्टाविंशतिकोटिनायकनरकस्थित पापिजनोद्धरणाय पापिनः संगिरस्य नरास्थितस्योद्धरणस्य च सानन्दशतानन्दचरितसिद्धान्तशिखामण्यादिषु प्रसिद्धत्वात् । किंच भल्लाण, चिरुतुण्ड, चारम, वेमाराध्योद्भटाराध्यादीनां शरीरेण, राज्येन, परिवारेण, ग्रामेण सह शिवलोकप्राप्तेस्तत्पुराणप्रसिद्धत्वात् । उक्तं चानुभवसूत्रे-'केचित्प्राणैः सह शिवपदं केचिदात्मीयकायैः । केचिद्दारैर्निजतनुभवैर्मन्दिरैर्बन्धुवर्गैः । ग्रामैर्देशैः सह परिजनैः केचिदन्ये क्रमेण । त्यक्त्वाचैतत्सकलमपि यान्ति स्वयं चैव भक्ताः ॥ प्राणादिवस्तुविषयेष्वनुरागयुक्ताः । भक्ताः प्रयान्ति कतिभिः सहिताः शिवैक्यम् ॥ केचिद्विरागनिरता विषयेषु तेषु त्यक्त्वा च तान् शिवपदं स्वयमेव यान्ति ॥' इति । शिवभक्तानां शिवयोगिना

मुपबृंहित शिवशक्तिकत्वात् । सत्यसंकल्पमात्रेण सर्वस्यापि सुलभत्वाच्च स्वशरीरपरिवारादिना शिवलोकप्राप्तेरपि सम्भवात् । उक्तं च क्रियासारे, 'भिन्दन्ति शैलानुदधीन् पिबन्ति व्यत्यासयन्ति क्षितिमन्तरिक्षम् । तृणीकृतब्रह्मपुरन्दराणां किं दुष्करं शंकरकिंकराणाम् ॥ अगस्त्यः कुम्भजन्मा तु शिवभक्त्यैव केवलम् । पपौ समुद्रमतुलं शिवशक्त्युपबृंहितः ॥' (क्रि. उ. १७. ३. ४.) इति । उक्तंचोत्पलदेवाचार्येण, 'न प्राप्यमस्ति भक्तानां नाप्येषामस्ति दुर्लभम् । केवलं विचरन्त्येते भवत्पूजामदोन्मदाः' इति (शिवसूत्रावलि १७. सू २३) उक्तश्च भगवता बादरायणेन मुक्तिफलस्यानियमः । 'एवं मुक्तिफलानियमस्तदवस्थाधृतेस्तदवस्थाधृतेः' [अः ३. ४. ५२] इति । शिवतत्त्वसाक्षात्कारवतां सर्वेषामशरीरमुक्तिरूपकैवल्य मुक्तिफलमेवेति नियमाभावात् । 'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' [तै. ब्रह्मवल्ली १.] इति श्रुतेः । 'एवं लिंगार्पितं सर्वमिति यो वेत्ति तत्वतः । सोऽश्नुते सकलान् भोगान् विपश्चिद्ब्रह्मणा सह ॥' इत्यनुभवसूत्रोक्तेः । ब्रह्मविदां ब्रह्मणा सह सर्वकामावाप्तेः दर्शनात् । परलोकवासनाविरहितानामशरीरज्योतिर्लिंगानुसन्धानवतामिहैवामूर्तदहराकाशज्योतिर्लिंगे शुषुप्तिसुखवदशरीरेण प्रारब्धवासनापर्यन्तं जीव-

न्मुक्तदशायां नित्यनिरतिशयानन्दमनुभूय तत्समाधिकाले प्रचण्डातपमध्यानिक्षिप्तनिवातदीपवत् स्थित्वा विदेहमु-क्त्यवसरे नदीसमुद्रन्यायेन परशिवैकत्वं सम्भवति। तद्भिन्नानां मूर्तपरशिवलोकभोगवासनायुक्तानां प्राणावसाने शिवलोकनिवासोचितदिव्यमंगलविग्रहेण सालोक्य, सामी-प्य, सारूप्यात्मक सशरीरमुक्तिर्भवति। तस्माज्जीवन्मुक्तानां सशरीरमुक्तिरेवाशरीरमुक्तिरेवेति नियमो नास्ति। मूर्त-परशिवब्रह्मोपासनया शिवयोगिचित्तस्य तदाकारपरिणामे-नावस्थितेरमूर्तपरशिवब्रह्मोपासनया तच्चित्तस्य तदाकारप-रिणामेनावस्थितेः। 'यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति तत्त्वज्ञः सदा तद्भावभावितः॥ अन्त्यकाले प्रबुद्धो यः सुहृदा बोधितोऽपि वा। शिवै-कमना ध्यायन्, स याति परमां गतिम्॥ यदा शिवात्मकं रूपं ध्यायन् प्राणान्विमुंचति। तदासौ शिवतां याति नान्यां गतिमिति श्रुतिः॥' इत्यादि श्रुतिस्मृत्यादिषु तथैवोपदेशात्। न च स्वर्गप्राप्ततेजश्शरीर नक्षत्रादिवत् शिवलोकप्राप्त महापुरुषाणामपि पुनरावृत्ति-रिति वाच्यम्। 'वेदान्तविज्ञान सुनिश्चितार्थाः सन्यासयो-गाद्यतयः शुद्धसत्वाः। ते ब्रह्मलोकेषु परान्तकाले परामृ-तात्परिमुच्यन्ति सर्वे' इत्यग्रिममन्त्रेण तल्लोकादेव विदेह-कैवल्य मुक्त्युपदेशात्। उक्तं च शैवपुराणे, 'दिनकृत्कोटिसं-

काश स्थानमाद्यमुमापतेः । सर्वकामसमायुक्तमन्तः क्लेशविवर्जिताः । सर्वज्ञाः सगणाः शुद्धाः परिपूर्णा भवन्ति च । विशुद्धकार्यकरणाः परमैश्वर्य संयुताः ॥ सदेहाश्च विदेहाश्च भवत्यात्मेच्छया पुनः । संप्राप्ता ये परं स्थानं ज्ञानयोगरता नराः । न तेषां पुनरावृत्तिर्घोरे संसारमण्डले ॥ ' इति ॥ १० ॥

इति तृतीयमुण्डके प्रथमखण्ड वीरशैवभाष्यम् ।



अथ तृतीयमुण्डके द्वितीयः खण्डः ।

परविद्योपदेष्टुः शिवतत्ववेत्तुरर्चनस्य मोक्षफलकत्वमाह-

स वेदैतत्परमं ब्रह्म धाम
　　यत्र विश्वं निहितं भाति शुभ्रम् ।
उपासते पुरुषं ये ह्यकामास्ते
　　शुक्रमेतदति वर्तन्ति धीराः ॥ १ ॥

' स वेद ' इति । यत्र षडक्षरात्मके परशिवब्रह्मणि महालिंगे विश्वं - स्थूलसूक्ष्मपररूपं जगत् निहितं - समर्पितं सत् शुभ्रं - शुद्धसिद्धप्रसिद्धप्रसादरूपं भाति - प्रकाशते । तदुक्तमनुभवसूत्रे—' षडक्षरात्मके लिंगे सर्वांगे सुप्रतिष्ठिते ।

तत्रैव चार्पितं सर्वमित्याहुः श्रुतयः खलु ॥' इति । यद्वा–विश्वं पृथिव्यादिग्राह्यतदभिमानि ग्राहक ब्रह्मादिसकलं प्रमेयप्रमात्रात्मकम् । निहितं – समर्पितं सत् शुभ्रं – परिशुद्धं भाति। तत् एतत् परमं सर्वोत्कृष्टं धाम स्वतन्त्रस्वप्रकाशतामय परशिवमहालिंगस्थलम् । सः – पूर्वोक्तो विशुद्धचित्तः। यतो वेद – साक्षात्करोति । ततः पुरुषं – साक्षात्कृतपरशिवमहालिंगतत्वं गुरुं अकामा हि – परलोकाविषयानभिलाषुका एव ये मुमुक्षवः । उपासते – हरमिवार्चनादिना सेवन्ते, 'यथा देवे परा भक्तिः' इति श्रुत्यन्तरात् ते धीराः – वीराः मुमुक्षवः । एतत् सर्वजनप्रसिद्धं शुक्रं – रेतः अतिवर्तन्ते – अतिक्रम्य वर्तन्ते । रेतोद्वारा स्त्रीयोनौ न प्रविशन्ति । किन्तु मुक्ता भवन्तीत्यर्थः । 'परमाद्वैतविज्ञान परमौषधिदानतः। संसाररोगनिर्माथी देशिकः केन लभ्यते ॥' इति रेणुकभगवत्पादोक्तेः। गुरोरपि शिववन्मन्त्रमूर्तित्वात् । परविद्यादातृत्वात् । 'गुरुरुपायः' इति शिवसूत्रेण तस्य मुख्योपायत्वेनोपदिष्टत्वात् । दीक्षात्रयेण मलत्रयं व्यपोह्य शिक्षया संशयादिकं निरस्य लिंगांगैक्यज्ञानदानेन जीवन्मुक्तिदातृत्वात् । गुरोरेव मुख्योपायत्वम् । तदुक्तं रेणुकभगवत्पादैः, 'शिववेधकरे ज्ञाने धत्ते येन सुनिर्मले । जीवन्मुक्तो भवेत् शिष्यः स गुरुः ज्ञानसागरः ॥' [सि. शि. १५-२९] इति ॥ १ ॥

अनवगतशिवतत्त्वानां कामानुसारेण तत्तज्जन्मप्राप्ति मवगतशिवतत्त्वानां निष्कामानां मुक्तिफलप्राप्तिं चाह—

कामान्यः कामयते मन्यमानः

स कामभिर्जायते तत्र तत्र ।

पर्याप्तकामस्य कृतात्मनस्तु

इहैव सर्वे प्रविलीयन्ति कामाः ॥ २ ॥

'कामान्यः' इति । यः कामान्–दृष्टादृष्टेष्टविषयान् मन्यमानः – भोग्यत्वेन चिन्तयमानः । कामयते – प्रार्थयते । स – पुरुषः । तत्र तत्र – देवमनुष्यादि भोग्यविषयेषु । कामभिः – कामैः सह । जायते – कामसंयुत एवोत्पद्यते । निष्कामस्य शिवज्ञानिनस्तु ततो वैलक्षण्यमाह 'पर्याप्तकामस्य' इति । पर्याप्ताः समन्तात्प्राप्ताः कामाः तत्तल्लोकोचित भोग्यपदार्थाः येन तस्य कृतात्मनस्तु – अवगतशिवलिंगसामरस्यस्य तु । इहैव – अस्मिन्नेव जन्मनि । सर्वे कामाः– सर्वे मनोरथाः । प्रविलीयन्ति – विलयं यान्ति । लिंगांगसामरस्यज्ञाननिरस्तकाममूलमलत्वात् । 'ये कृतात्मानः ज्ञानवन्तः तेषां परपदप्राप्तिं र्निरतिशयमोक्षः' इति । श्री नीलकण्ठशिवाचार्यैरप्युक्तत्वात् । इहैव स्वदेवता साक्षात्कारपर्यन्तोपासनावन्त एव कृतात्मानस्तेषां मोक्षस्य 'परस्यान्ते कृता-

त्मानः प्रविशन्ति परं पदम् ' इति पुराणोक्तत्वात् । न कृतात्मनां पुनरावृत्ति प्रसक्तिः ॥ ' शब्ददर्दुरं करोति ' इत्यत्रैव कृञो ज्ञानमर्थः ॥ २ ॥

इष्टलिंगधारणस्यान्वयमुखेन साक्षान्मुक्तिकारणत्वमभिधातुं तदितरवेदाध्ययनादिकस्य काणत्वं निराकरोति । ' नायमात्मा ' इति ॥

नायमात्मा प्रवचनेन लभ्यो
न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष
आत्मा विवृणुते तनुं स्वाम् ॥ ३ ॥

अयमात्मा – प्रकृतः परमात्मा शिवः । प्रवचनेन- केवल वेदाध्यनेन न लभ्यः – न प्राप्यः । न मेधया – केवल वेदार्थावबोधरूपया बुद्धया न लभ्यः । न बहुना श्रुतेन – गुरूपदेशरहितेन बहुश्रवणेनापि न लभ्यः । तर्हि केनोपायेन लभ्य इत्यत आह ' यम् ' इति । एव – मुमुक्षुः यं – परशिवलिंगम् । वृणुते – प्राणेष्टलिंगरूपेणान्तर्बहिर्धत्ते । तेन- मुमुक्षुणा वीरशैवेन लभ्यः प्राप्यः ' ये धारयन्ति हृदये लिंगं चिद्रूपमैश्वरम् । न तेषां पुनरावृत्तिर्घोरे संसारमण्डले ' इति रेणुकभगवत्पादोक्तेः । उक्तं च नीलकण्ठशिवाचार्येण

'नायमात्मेति वाक्येन शिवस्य वरणं तनोः। वरणं नाम तद्रूपधारणं विधिमार्गतः' इति। तस्य – मुमुक्षोः, एष आत्मा शिवः। स्वां–स्वकीयां तनुं – सालोक्यं सारूप्यं सायुज्यं वा फलं विवृणुते – प्रकाशयति। 'अमृतस्य देव-धारणो भूयासम्' इति श्रुत्यन्तरात्। 'मोक्षार्थिनां मुक्ति-हेतुर्लिंगधारणमीर्यते।' इति पुराणोक्तेः। 'मल्लिंगधारणा-ल्लोके न किंचिदपि दुर्लभम्। यंल्लोकवसतिं कांक्षेत् तत्र सिध्यति पार्वति। ब्रह्मलोकं विष्णुलोकं रुद्रलोकमथापि वा। सम्प्राप्य योगिविहितं सोमलोकं मदालयम्। सालोक्यं चैव सारूप्यं सष्टिसायुज्यमप्यथ। प्रयाति धृतलिंगो यः साम-रस्य पुरस्सरम्।' इति कामिकोत्तर वचनाच्च। यद्वा स्वां स्वकीयां तनुं। सर्वज्ञतादिरूपां विवृणुते – प्रकटयति। 'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्' इति श्रुतेः। 'सर्वज्ञता तृप्तिरनादिबोधः। स्वतन्त्रता नित्यम-लुप्तशक्तिः। अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरंगानि महे-श्वरस्य॥' इत्यागमोक्तेः॥ ३॥

व्यतिरेकमुखेन लिंगधारणस्य साक्षान्मुक्तिकारणत्वम-भिधातुं प्रवृत्तोऽयं मन्त्रो बलादीनामपि तत्सहकारितामाह–

नायमात्मा बलहीनेन लभ्यो

न च प्रमादात्तपसो वाप्यलिङ्गात्।

एतैरुपायैर्यतते यस्तु विद्वां स्तस्यैष
आत्मा विशते ब्रह्म धाम ॥ ४ ॥

' नायमात्मा ' इति । अयमात्मा – प्रकृतः परमात्मा शिवः । बलहीनेन – बलं शिवशक्तिः, तद्रहितेन चिच्छक्तिसंकोचचित्तशक्तिविशिष्टेन पुरुषेणेत्यर्थः । न लभ्यः – न प्राप्यः । किन्तु यस्य चित्तं यदा अन्तर्मुखीभावाभ्यासेन चेतनशिवपदमध्यारुह्य चिच्छक्तिरूपेण परिणमति तदा तेन पुरुषेण लभ्य इत्यर्थः । ' बललाभे विश्वमात्मसात्करोति ' (प्र.हृ.सू. १५) इति शक्तिसूत्रस्थितेः । ' अतः पशुरसौ सर्वैः पाशमुक्तः पतेर्बलात् ' [सू. ५-२१] इति सूक्ष्मतन्त्रे पाशमुक्तेः पशुपति बलकारणकत्वस्योक्तत्वात् । न च प्रमादात् - अनवधानतादिलक्षणात् – प्रमादशब्दस्येतरश्रद्धादीनामुपलक्षकत्वात् । श्रद्धादिषड्विधभक्तिराहित्यान्नलभ्यः । किन्तु श्रद्धादिषड्विधभक्तिसाहित्यादेव लभ्य इत्यर्थः । तपसो वा कृच्छ्रचान्द्रायणादिरूपात् न लभ्यः । किन्तु शिवपूजार्थं सामग्रीसम्पादने शरीरशोषणरूपात्तपसः लभ्य इत्यर्थः । अलिंगाद्वा – अविद्यमानं लिंगं यस्य सोऽलिंगस्तस्मादलिंगिनोऽवीरशैवात् न लभ्यः । किन्तु लिंगिनो वीरशैवाल्लभ्य इत्यर्थः । धृतेष्टलिंगत्वस्य वीरशैवासाधारणलक्षणत्वात् । ' अन्यत्र नास्ति मल्लिंगधारणं मतव-

तिंषु [पा. प. १-६८] इत्याद्यागमोक्तेः । 'अतप्ततनुर्नतदामो अश्नुते [ऋ. ७.३.८] इति श्रुतेः । 'अतप्ततनुरज्ञो वै आमः संस्कारवर्जितः । दीक्षया रहितः साक्षान्नाप्नुयाल्लिंगमुत्तमम् ॥ [सि. पं. ६-४०] इति रेणुकभगवत्पादोक्तेः । शिवरहस्येऽप्युक्तं 'परिशुद्धेन मनसा नियमेन दृढव्रतः । शिवस्य लिंगं बिभ्राणः शिवमेव प्रपद्यते ॥' इति, 'तपः कृच्छ्रादिकर्म च' इत्यमरकोशप्रसिद्धार्थपरित्यागे मानाभावात् । न ज्ञानाद्यर्थकत्वं तपः शब्दस्य । किं च लिंगशब्दस्य 'ऊर्ध्वाय नमः, ऊर्ध्वलिंगाय नमः' इत्यादिना 'सर्वे लिंगं स्थापयति' इत्यन्तेन श्रूयमाणलिंगशब्दपरंपरायाः परशिवलिंगे प्रयोगदर्शनान्न संन्यासाद्यर्थकत्वम् । शब्दशक्तेः पूर्वपूर्व प्रयोगनियतत्वात् । 'लिंगे सुषुप्तिः' [हंसोपनिषत्] 'लिंगं ब्रह्मैव केवलम्' [साम-रुद्रसूक्ते] 'मस्तके लिंगधारणम्' [गौतम स्मृतिः] 'ब्राह्मणा वीरशैवस्थाः शिखायज्ञोपवीतिनः । लिंगरुद्राक्षभस्मांका ब्रह्मकर्मसमाश्रिताः' [पा. प. १७] इत्याद्यनन्तश्रुतिस्मृत्यादिषु लिंगशब्दस्य शिवलिंग एव प्रयोगदर्शनाच्च । किंच 'आतिवाहिकास्तल्लिंगात्' [ब्र. सू. ४-३-४] इत्यत्र अगस्त्यमुनिसार्वभौमेन स्वकीयलघुसूत्रवृत्तौ—'लिंगे सुषुप्तिः' इत्यादि बहुश्रुतिषु घट-कुम्भशब्दादिवद्ब्रह्मलिंगशब्दयोः पर्यायत्वावगमात् । तल्लिंगात् । तत्पूर्वोक्त दहरादिसर्वविद्योपास्य परशिवात्प्रेरिताः

सन्तः । आतिवाहिकाः । मर्त्यलोक शिवलोकांतराल निवासिनो देवाः । दहरादिसर्वब्रह्मविद्योपासकं पुरुषं सौधसोपानन्यायेन क्रमक्रमेण निरुपमानन्दनित्यवैभवमहाकैलासं नयन्ति इति व्याख्यातत्वाच्च न पराभिमत संन्यासाद्यर्थकत्वं लिंगशब्दस्य । एतैरुपायैः पूर्वोक्तैर्बलादिभिस्साधनैः यः विद्वान् शिवतत्त्वज्ञानी । यतते – यत्नवान् भवति । तस्य साधकस्यात्मा – शुद्धात्मा शिवांशरूपः । ब्रह्मधाम – परशिवज्योतिर्लिंगं विशते – प्रविशति । नदीसमुद्रन्यायेन परशिवसमरसो भवतीत्यर्थः ॥ ४ ॥

उक्तलिंगांगसामरस्यमेव विशदयति—

संप्राप्यैनमृषयो ज्ञानतृप्ताः
कृतात्मानो वीतरागाः प्रशान्ताः ।
ते सर्वगं सर्वतः प्राप्य धीरा
युक्तात्मानः सर्वमेवाविशन्ति ॥ ५ ॥

'सम्प्राप्य' इति । ये ऋषयः – शिवतत्त्वज्ञानिनः । एनं परमात्मानं शिवं संप्राप्य – सम्यक् सामरस्येन प्राप्य– आधारादिस्थानगताचारादि लिंगोपासनाबलात् प्राणान् धारयन्तोऽपि परशिवमहालिंगसमाधिसुखात्मक मुक्तिमनुभूयेत्यर्थः । ज्ञानतृप्ताः – ज्ञानेन तेनानुभवेन तृप्ताः –

सन्तुष्टाः । कृतात्मानः – शिवांशभावेन कृत आत्मानो येषां ते । स्वजीवभावं व्यपोह्य शुद्धशिवांशभावेन स्थिता इत्यर्थः । 'आत्मायं केवलः शुद्धः शिवस्यांशः सदामलः । नित्यो निरंजनश्शान्तस्तस्मादात्मा स्वयं शिवः ॥' इत्यनुभवसूत्रोक्तेः । वीतरागाः – अपगतरागादिदोषाः । अत एव प्रशान्ताः – विशुद्धसत्वाः ऊर्ध्वमायाक्रान्ता इत्यर्थः। ते धीराः – वीराः, सर्वगं – सर्वगतं परशिवलिंगम् । 'सर्वानन शिरोग्रीवः सर्वभूतगुहाशयः । सर्वव्यापी च भगवांस्तस्मात्सर्वगतः शिवः' [श्वेता. ३–१०] इति श्रुतेः । सर्वतः – साकल्येन प्राप्य तत्र – परशिवलिंगे समरसीभूय युक्तात्मानः – युक्ताः संयोजिताः आत्मानः शुद्धात्मानः शिवत्वमापन्ना इत्यर्थः । सर्वमेव – सर्वात्मक परशिवलिंगमेव विशन्ति – प्रविशन्ति । सर्वात्मक सर्वाधिक परशिवाभिन्ना भवन्ति । देहकलाया अपि विलीनत्वात् देहपातानन्तरं विदेहमुक्तिभाजो भवन्तीत्यर्थः ॥ ५ ॥

वेदान्तविज्ञानसुनिश्चितार्थाः
संन्यासयोगाद्यतयः शुद्धसत्वाः ।
ते ब्रह्मलोके तु परांतकाले
परामृतात्परिमुच्यन्ति सर्वे ॥ ६ ॥

'वेदान्त' इति। यतयः – उक्तवलादिसाधनैर्मोक्ष-प्राप्तिप्रयत्नशीलाः। वेदान्तविज्ञानसुनिश्चितार्थाः – वेदान्तः सप्रणवपंचाक्षरमहामन्त्रः, तेन यद्विज्ञानं श्रवणात्मकं विचार-रूपं तेन सुनिश्चिता अर्थाः लिंगं च अंगं च तयोः सामरस्यं च ते एते पदार्थाः येषां ते। 'शिवस्य बाह्यपूजान्ते तदेक-न्यस्तमानसः। वेदान्तार्थविचारोऽयं कार्यः पाशनिवृत्तये। वेदान्तार्थविचारोऽयं श्रुतिभिः श्रवणं भवेत्। श्रुतिः पंचा-क्षरो मन्त्रो मन्त्रार्थस्यैव चिन्तनम्॥ तच्चिन्तनानुकूलास्ता श्रुतयः सकला अपि। शास्त्राणि स्मृतयश्चैव पुराणानि दशाष्ट च' (क्रिया. २७-१२३) इति श्रीनीलकण्ठशिवाचा-र्योक्तेः। यद्वा वेदान्तपदेन यावद्वेदान्त उच्यते। संकोचे मनाभावात्। तेन विज्ञानं श्रवणादिरूपं 'आत्मा वा रे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृह. २·४·५) इति श्रुतेः। तेन सुनिश्चितार्थाः सम्यक् संशयादिराहित्येन निश्चिताः प्रमाविषयीकृताः अर्थाः पदार्थाः पतिपशुपाशरूपाः येषां ते। वेदान्तविज्ञानसुनिश्चितार्थाः सन्तः। संन्यासयो-गात् – सम्यक् न्यासश्चित्तस्य ज्योतिर्लिंगेऽर्पणम्। अवि-च्छिन्नतैलधारावदखण्डज्योतिर्लिंगाकारपरिणामात्मकध्यान-मित्यर्थः। तेन यो योगः – समाधिः। 'युज् समाधौ' इति धात्वर्थात्। तस्मात् शुद्धसत्वाः – परिशुद्धचित्ता अपगत सुखदुःखमोहमयचितिशक्तिसंकोचरूपाधोमायात्मक-

चित्ता उपगतचितिशक्त्यात्मकोर्ध्वमायारूप शुद्धय इत्यर्थः। ते सर्वे भक्ताः। ब्रह्मलोके तु – शिवलोकेऽपि शिवस्य ब्रह्मापरपर्यायत्वात्। स्थित्वा तत्र स्वेच्छानुसारेण सर्वैश्वर्ययोगमनुभूय ततः। परान्तकाले – परस्य तच्छिवलोकभोगवासनामयस्य शरीरस्य, अन्तकाले। परामृतात् – परात् सर्वोर्ध्ववर्तित्वादुत्कृष्टात् कैलासात्। परिमुच्यन्ति – सूक्ष्मपरशरीरं विहाय परिपूर्णं शिवसायुज्यं प्राप्नुवन्तीत्यर्थः। तथा अन्यत्र दहरविद्यायां श्रूयते, 'यदिहात्मानमनुविद्यव्रजन्त्येतांश्च सर्वान् कामान्' इति। परलोकवासनायुक्तभक्तानां सर्वकामावाप्तेर्दर्शितत्वात्। तस्मादनेन मन्त्रेण परलोकभोगवासनायुक्तभक्ताः कामवासनया शिवलोकमनुप्रविश्य तत्र सर्वान् कामाननुभूय वासनाक्षये तल्लोकादेव शिवसायुज्यं प्राप्नुवन्तीति निश्चीयते। निष्काम सकामभक्तानां फलभेदेऽपि चरमसायुज्यफलमेकमेव। 'ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे' इति पाठे ब्रह्मलोकेषु – चतुर्मुख विष्णु शिवलोकेषु स्कान्दशिवधर्मोत्तरादिषु तारतम्येन वर्णितेषु परामृताः – परः सर्वोर्ध्ववर्तित्वात् सर्वोत्कृष्टः अमृतः नित्यः कैलासः प्राप्यत्वेन येषां वर्तते। ते कैलासापरपर्याय शिवलोकं प्राप्ताः सर्वे भक्ताः। उक्तं च पारमेश्वरतन्त्रे 'न कैलासात्परो लोको न दैवं शंकरात्परम्। न वीरशैवाच्च मतं नास्ति मुक्तेः परं सुखम्॥' (पार. प. १०-८८)

इति । परिमुच्यन्ति – शिवलोकोचितशरीरधारणेन तत्रस्थभोगान् भुक्त्वा लिंगशरीरं विहाय शिवसायुज्यं विदेहकैवल्यं प्राप्नुवन्तीत्यर्थः । उक्तं च शिवधर्मोत्तरे पाताललोकमारभ्य तपोलोकपर्यन्तं त्रयोदशलोकानामुपरिभावं पूर्वपूर्व लोकापेक्षयोत्तरोत्तर लोकस्य योजनसंख्यापुरस्सरं वर्णयित्वा अनन्तरं 'सत्यलोकस्तपोलोकात्कोटिषष्टि समुच्छ्रितः ।' इति ब्रह्मलोकस्य तपोलोकापेक्षयोपरिभावमुक्त्वा, अनन्तरं 'ब्रह्मलोकाद्विष्णुलोकाद्विगुणेन समुच्छ्रितः । विस्तरेण तदर्थं च दिव्यभोगसमन्वितः ॥ विष्णुलोकाच्च परतः श्रीमच्छिवपुरं महत् । द्वात्रिंशत् कोटिविस्तीर्णं तदर्धं च समुच्छ्रितः । सूर्यायुतप्रतीकाशं सर्वकामार्थसिद्धिदम् ॥' इत्यादिना शिवलोकस्य सर्वोपरिभावमुक्त्वा अनन्तरं 'सम्प्राप्ता ये परं स्थानं ज्ञानयोगरता नराः । न तेषां पुनरावृत्तिर्घोरे संसारमण्डले ।' इत्यादिना पुनरावृत्तिरहित शिवसायुज्य मुक्तेर्वर्णितत्वात् ब्रह्मलोकशब्दतल्लोकत्रयमध्ये शिवलोकस्य सर्वोत्कृष्टत्वम् । तल्लोकप्राप्तानां भक्तानां तल्लोकभोगवासनाक्षये शिवसायुज्यं च सिद्धम् । 'तयोर्ध्वमायन्नमृतत्वमेति' इति श्रुत्या मूर्धन्यया नाड्या सर्वोर्ध्ववर्तिशिवलोकं गतस्यामृतत्वप्राप्तेर्वर्णितत्वात् । 'न च पुनरावर्तते न च पुनरावर्तते' इति परशिवब्रह्मलोकं गतस्यानावृत्तेः श्रूयमाणत्वाच्च ॥ ६ ॥

लिंगांगसामरस्यात्मक शिवसायुज्ययुक्तिक्रममाह—

गताः कलाः पंचदशप्रतिष्ठा
देवाश्च सर्वे प्रतिदेवतासु ।
कर्माणि विज्ञानमयश्च आत्मा
परेऽव्यये सर्व एकीभवन्ति ॥ ७ ॥

'गताः कलाः' इति । विरागनिरतस्य विदुषो मोक्षकाले पंचदश – 'स प्राणमसृजत प्राणाच्छ्रद्धां' इत्यादिना प्रश्नोपनिषदुक्ताः पंचदशसंख्याकाः कलाः प्राणश्रद्धास्थूलभूतपंचेन्द्रिय मनोऽन्नवीर्यं तपोमन्त्र कर्मलोकात्मकाः देहभागाः प्रतिष्ठाः गताः, प्रतिष्ठा इति द्वितीयाबहुवचनम् । स्वस्वकारणलिंगं प्राप्ता भवन्तीत्यर्थः । सर्वे देवाश्च । ज्ञानेन्द्रिय कर्मेन्द्रियतदभिमानिदेवाश्च, प्रतिदेवतासु – स्वस्वकारणाधिष्ठात्रीषु सद्योजाताद्याह्वयासु मूर्तिषु गता भवन्तीत्यनुषङ्गः । तदुक्तमनुभवसूत्रे, 'श्रोत्रस्य वाचः शब्दस्य विभोर्व्योम्नस्तथैव च । ईश्वरीमीश्वरस्यैनामीशानाख्यां विदुर्बुधाः ॥ त्वक् पाणि स्पर्शवायूनां ईश्वरीं मूर्तिमैश्वरीम् । पुरुषाख्यां विदुः पूर्वं पुराणागमवेदिनः ॥ चक्षुषश्चरणस्यापि रूपस्याग्नेस्तथैव च । अघोराख्यामधिष्ठात्रीं मूर्तिमाहुर्मनीषिणः ॥ रसनाया उपस्थस्य रसस्यापां तथैव च । ईश्वरीं वामदेवाख्यां मूर्तिं मुनिवरा विदुः ॥ घ्राणस्य चैव पायोश्च गन्धस्य च भुवस्तथा । सद्योजाताह्वयां मूर्तिमीश्वरीं

सम्प्रचक्षते ॥' इति। कर्माणि – प्रारब्धव्यतिरिक्तानि प्रारब्धस्य भोगमन्तरा विलयाभावात्। विज्ञानमयः आत्मा च मलत्रयापसरणात् केवल चिदंशरूपः शुद्धात्मा च सर्वे उक्तकर्मादयः सर्वे परे – सर्वोत्कृष्टे अव्यये – नित्ये परशिवमहालिंगे एकीभवन्ति। साक्षात्परंपरासंबन्धेन समरसा भवन्ति। भूतभौतिकानां स्व स्व कारणसामरस्यात् तदभिमानिब्रह्मादिदेवानामपि सामरस्यात् नदीसमुद्रन्यायेनैक्यमविभागात्मकमभेदं प्राप्नुवन्तीत्यर्थः ॥ ७ ॥

ऐक्यात्मक षष्ठाङ्गस्यात्मनः शुद्धस्याविभागात्मकमभेदं दृष्टांतपूर्वकमाह—

यथा नद्यः स्यन्दमानाः
समुद्रेऽस्तं गच्छन्ति नाम रूपे विहाय।
तथा विद्वान् नामरूपाद्विमुक्तः
परात्परं पुरुषमुपैति दिव्यम् ॥ ८ ॥

'यथा' इति। नद्यः – गङ्गायमुनासरस्वत्याद्याः। स्यन्दमानाः – गच्छन्त्यः। नामरूपे – नाम च गंगादि, रूपं च शुक्लादि ते विहाय – त्यक्त्वा। यथा समुद्रे अस्तमविभागं गच्छन्ति – प्राप्नुवन्ति। इयमियं नदीति भेदेन न प्रतीयन्ते। किन्तु समुद्रं प्राप्ताः समुद्रसमरसाः समुद्रनाम

रूपापन्ना एव भवन्ति । तथा विद्वान् – षट्स्थलब्रह्मज्ञानी । नामरूपात् – नाम च चतुर्मुखादि रूपं च पृथिव्याद्यङ्गं तस्मात् । विमुक्तः – पृथिव्याद्यङ्गाभिमानं तदभिमानप्रयुक्त ब्रह्माद्यभिधानं च त्यक्त्वा, परात् – चिच्छक्तिरूपात् ‘ अक्षरात्परतः परः ’ इत्यत्र पंचम्यन्तपदोपस्थाप्यात् । परं उत्कृष्टं तां शक्तिं स्वाहंतयाच्छाद्य स्थितत्वात् । ‘ ऊर्ध्वाय नमः ऊर्ध्वलिंगाय नमः ’ इति श्रुतेः । दिव्यं स्वप्रकाशतामय चिच्छक्ति वपुषि स्थितम् । पुरुषं – सर्वस्मिन् परिपूर्णं परशिवब्रह्म । उपैति – प्राप्नोति । तत्र सामरस्यं सायुज्यं गच्छंतीत्यर्थः । अयमत्राशयः संन्यास्यवधूत योगी पाशुपत, शिव, लिंगी, वीर, वीरशैव, महामहेश्वर यत्यपरपर्याय वीरशैव ब्राह्मणवर्णसंजनित विरक्तानां कैलासादिपदकांक्षाराहित्याभ्यासस्यापि विहितत्वात् । ते तदभ्यासदार्ढ्यात् परलोकभोगं विना परशिवसायुज्यमेवाप्नुवन्ति । इतराश्रमिणश्च विरागा अविरागा भोगमन्तरा भुक्त्वा च गच्छन्तीति । निराभारस्य वीरशैवसन्यासिनो लिंगिनः कैलासादि पदाकांक्षाराहित्यं च विहितं ‘ कैलासादि पदाकांक्षां त्यजेल्लिंगांगयोगभाक् ’ [सू. तन्त्र. ७.९५] इति । तस्मात् सर्वेऽपि शिवाश्रमिणो विरागा शिवलोकभोगं विना निष्कलपरशिवसायुज्यभाजो भूत्वा निष्कलपरशिवरूपा एव भवन्ति । ‘ स एषोऽकलोऽमृतो भवति ’ [प्र. ६. ५] इति श्रुतेः । अत्र नदीसमुद्रदृष्टान्तेन दर्शितमिदं लिंगांगसा-

मरस्यं विवर्तवादे न सम्भवत्येव । तत्र कलानां जीवात्मनश्च मिथ्यात्वात् दृष्टान्ते नदीसमुद्रान्यतरस्य मिथ्यात्वाभावात् । सदसतोः सामरस्याभावात् । सतीनां नदीनां सति समुद्रे सामरस्यस्य प्रत्यक्षसिद्धत्वात् । न हि भवति मरुमरीचिकाजलस्यासत्यस्य सत्ये जले सामरस्यम् । ननु किमिदं सामरस्यमभेद इति चेन्न । भेदाभावात्मकाभेदस्य प्रतियोगिभेदसिध्यनन्तरसिद्धिकत्वात् । घटभेदप्रतियोगिनो घटस्य सिद्धिं विना घटभेदासिद्धेः । नह्यप्रसिद्धस्य गगनीयत्व विशिष्ट पुष्पस्य भेदः सिध्यति । भेदस्यान्योन्याभावस्य नित्यत्वात् । न हि घटं पटं कर्तुं शक्यते केनापि प्रमाणेन । तस्माद्घटपटभेदवल्लिंगांगयोरपि भेदस्य केनापि कदापि वारयितुमशक्यत्वात् । न लिंगांगयोरभेदरूपं सामरस्यं सिध्यतीति चेत्प्रथमं भेद एव विमर्शनीयः । भेदो नाम किमन्योन्याभावो वा ; वैधर्म्यं वा ; वस्तुस्वरूपं वा ? आद्ये – तत्रान्यत्वं भावस्वभावो वा ? भेदनिबन्धनः कश्चिदुपाधिर्वा ? नाद्यः भावस्याभावत्वप्रसंगात् । अन्यत्वस्य भावस्वभावत्वात् । भावादन्योऽभाव इति प्रसिद्धत्वात् । न च भावानां बाहुल्यात् । भावस्य भावान्तरान्यत्वं स्वभाव इति वाच्यम् । तस्य विशेषघटितत्वात् । इह तु भेदसामान्यलक्षण प्रविष्टान्यत्वस्य प्रश्नविषयत्वात् । तस्योत्तरस्यानर्हत्वात् । तस्य भेदसामान्यसिध्यनन्तरभावित्वात् । किंच भावस्य भावांतरान्यत्वं स्वभाव

इति नियमः तत्तद्भावकृतो वा ; तद्व्यतिरिक्तमहापुरुषकृतो वा ? नाद्यः – घटादिभावस्य जडत्वेन कर्तृत्वाभावात्। न द्वितीयः– कल्पनायाः प्रागनन्यत्वेनान्तरालिकतया अन्यत्वस्य तत्स्वभावत्वासम्भवात् । ननु न केनापि कृतः किन्तु स्वतः सिद्ध इति चेत् । स्वप्रकाशोऽपि स्यात् । ब्रह्मवत्स्वतःसिद्धत्वात् । न च ब्रह्मापि मानान्तरासिद्धत्वात् न स्वतः सिद्ध इति वाच्यम् । ब्रह्मणो नित्यत्वेन कारकव्यापारासंभवात्। स्वप्रकाशत्वेन ज्ञापकव्यापारासंभवात् । अन्यथा जडत्वप्रसंगात् । नापि द्वितीयो भेदनिबन्धनः कश्चिदुपाधिः आत्माश्रयादि दोषप्रसंगात्। नापि द्वितीयो वैधर्म्यरूपो विकल्पः। घटे पटत्वं नास्ति पटे घटत्वं नास्तीत्येवंविध वैधर्म्यनिश्चयस्य घटपटभेदसिध्यनन्तरभावित्वात्। न च घटपटयोस्तन्तुमयत्व मृण्मयत्वाभ्यां भेदः सिद्ध एवेति वाच्यम्। घट एव मृण्मयत्वं पट एव तन्तुमयत्वमित्यसाधारण प्रतीतेर्घटपटभेद सिध्यधीनत्वात्। तस्या अद्यापि साध्यकोटिप्रविष्टत्वात्। किंच तन्तुमयत्व मृण्मयत्वयोर्भेदस्तत्तदवयवभेदात्। तद्भेदस्तदवयव भेदात् इति परमाणुपर्यन्तपर्यालोचनायां परमाणूनां निरवयवत्वेन भेदाग्रहात् । न च परमाणुभेदकः कश्चिद्विशेषोऽस्तीति वाच्यम् । तदेतत्परमाणु विशेषाणामपि भेदकस्य कस्यचिद्विशेषस्य स्वीकार्यत्वे मूलक्षयकारिण्यनवस्था स्यात् । नापि तृतीयो वस्तुस्वरूपो

भेद इति। वस्तुस्वरूपं हि वस्त्वन्तरस्वरूपाननुगामीत्यङ्गीकरणीयम्। अन्यथा स्वरूपसांकर्यापत्तेः। एवं चेदं रजतमित्यत्र शुक्तिरेव रजतत्वेन निश्चीयते इति भ्रान्तिज्ञानोच्छेदप्रसङ्गः। रजतवस्तुस्वरूपस्य शुक्तिवस्त्वन्तरस्वरूपाननुगामित्वात्। न च रजतत्वस्य तत्स्वरूपाननुगामित्वेऽपि दूरत्वादिदोषवशादेव तथा निश्चीयते इति वाच्यम्। इंगालादिकस्यापि रजतत्वेन निश्चीयमानत्वापत्तेः। तत्रापि दूरत्वादिदोषसद्भावात्। न च तत्र श्यामत्वादि विशेषदर्शनसामग्री प्रतिबन्धिकेति वाच्यम्। शुक्तिकायामपि नीलपृष्ठत्वादि विशेषदर्शनसामग्रीसत्त्वेन अनारोपप्रसङ्गात्। तत्र विशेषसामग्रीप्राबल्यात् आरोपः संभवतीति चेन्न। वस्त्वन्तरे वस्त्वन्तरस्वरूपमनुप्रविष्टमित्यङ्गीकरणीयत्वेनाननुप्रविष्टमिति वक्तुमशक्यत्वेन स्वरूपसांकर्यापत्तेरनिवार्यत्वेन भेदवादोच्छेदप्रसङ्गात्। न वस्तुस्वरूपो भेदः। किंच वस्तुनि भासमानो भेदस्तत्तद्वस्तुस्वरूपादभिन्नो वा, तद्भिन्नो वा। नाद्यः, अत्यन्तविरोधात्, भेदस्याभेदत्वापत्तेः। न द्वितीयः सोऽपि भेदः कीदृश इत्युपर्युपरि विचार्यमाणे सत्यनवस्थामेवोपस्थापयति। विश्रान्त्यभावात्। नाप्यभेदात्यन्ताभावो भेदः। आत्माश्रयदोषात्। नाप्यैक्यप्रतियोगी भेदः। एकत्वस्य प्रतियोगित्वाभावात्। द्वित्वादीनां तन्मूलकत्वात्। तदयोगात्। 'एक एव रुद्रो न द्वितीयाय तस्थ' इति श्रुतेरेकस्यैव शिवस्य

नित्यत्वावगमात् । द्वित्वादीनामपेक्षाबुद्धिजन्यत्वस्य भेदवादिभिरप्यंगीकृतत्वात् । 'यदा तमस्तन्न दिवा न रात्रिर्न सन्नचा सच्छिव एव केवलः' इति श्रुत्या सृष्टेः प्राक् द्वितीयवस्तुशून्यत्वस्य ज्ञायमानत्वात् । नापि विभागो भेदः । विभागस्य संयोगपूर्वकत्वेन प्राचीप्रतीच्योर्दिशोः पूर्वपश्चिमाचलयोश्च संयोगस्याभावेन तयोः भेदाभावप्रसंगात् । नापि पृथक्त्वं भेदः । गुणगुणिनोर्भेदाभावप्रसंगात् । घटो न रूपमिति घटभेदस्य रूपे प्रत्यक्षसिद्धत्वात् । तस्माद्गत्यन्तराभावेन भेदव्यवहारसिध्यर्थं सकलसामरस्यात्मनो महेश्वरस्येच्छावशात् सागरतरंगन्यायेन जन्यो विभागो भेद इत्यंगीकरणीयत्वेनाविभागरूपोऽभेदः सामरस्यमिति सिद्धान्तः । सागरतरंगविभागस्याप्यभेदपर्यवसायित्वात् । तदुक्तं शैवे व्यासमहर्षिणा 'यद्यपि भेदापगमे सांब तवाहं न मामकीनस्त्वम् । सामुद्रो हि तरंगः क्वचिन्न समुद्रो तारंगः' इति । लिंगांगयोरविभागात्मकाभेद एव सिध्यति । तदेतत्सामरस्यमनेन मन्त्रेण स्फुटीकृतमिति चोद्यम् ॥ ८ ॥

तत्परशिवमहालिंगसामरस्यापन्नस्य शिवयोगिनः शिवत्वाभिव्यक्तिमुक्तिमाह—

स यो ह वै तत्परमं ब्रह्म वेद
ब्रह्मैव भवति नास्याब्रह्मवित् कुले भवति ।

तरति शोकं तरति पाप्मानं
गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ॥ ९ ॥

'यो ह वै' इति। यः कोऽपि पुरुषः हवै – निश्चयेन। तत् – प्रकृतं, परमं – सर्वोत्कृष्टं। ब्रह्म – महालिंगम्। वेद – सामरस्येन साक्षात्करोति। सः – लिंगांगसामरस्य वित् शिवयोगी। ब्रह्मैव – परशिवब्रह्मस्वरूप एव भवति। न तु कथंचित्ततोऽपकृष्टो भवति। मुक्तस्य परशिवब्रह्मणः कथंचिदपकर्षे संसारित्वापत्तेः। प्रकर्षापकर्षप्रयुक्तभेदसद्भावात्। भेदे भयसद्भावात् अभयात्मकमुक्तेरभावात्। 'अभयं वै जनकः प्राप्तोऽसि' इति श्रुतेः। किंचास्य शिवतत्त्वज्ञानिनः कुले – पुत्रादिवंशे। अब्रह्मवित् – शिवतत्त्वज्ञानरहितो न भवति। किंतु शिवतत्त्वज्ञानवानेव भवतीत्यर्थः। किंच शोकं – इष्टवस्तुनोऽप्राप्त्या नाशेन वा जनितं संतापं। तरति – अतिक्राम्यति। पाप्मानं – दुःखजनकमधर्मं तरति – गुहाग्रन्थिभ्यो गुहासु – आधारादिस्थानेषु ये ग्रन्थयस्तेभ्यो ब्रह्मादिग्रन्थिभ्यः पृथक् सिद्धानां पृथिव्यादीनामप्यपृथक्सिद्धत्वेनाभिमानरूपा एव ग्रन्थयस्तेभ्यो ग्रन्थिवद्दुर्मोचेभ्य इत्यर्थः। विमुक्तः – विरहितस्सन्। अमृतो भवति – मुक्तो भवति। 'आहारशुद्धौ

सत्त्वशुद्धिः सत्त्वशुध्या ध्रुवा स्मृतिः । स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः ॥' इति श्रुतेः ॥ ९ ॥

ब्रह्मविद्यासम्प्रदाने विधिं दर्शयन् लिंगधारणात्मक शिरोव्रतसम्पन्नानामेव ब्रह्मविद्याधिकारित्वं दर्शयत्ययं मन्त्रः ।

तदेतदृचाभ्युक्तम्—

क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः
स्वयं जुह्वत एकर्षिं श्रद्धयन्तः ।
तेषामेवैतां ब्रह्मविद्यां वदेत
शिरोव्रतं विधिवद्यैस्तु चीर्णम् ॥ १० ॥

'तदेतदिति' इति । तदेतत् – ब्रह्मविद्यासम्प्रदान विधानम् । ऋचा – मन्त्रेण । अभ्युक्तं – अभिहितं । तं मन्त्रं दर्शयति क्रियेति । क्रियावन्तः – पतिक्रियावन्तः । परित्यक्त पशु कर्माणोऽनुष्ठितपतिकर्माण इत्यर्थः 'न कर्मणा न प्रजया' 'नास्त्यकृतः कृतेन' इत्यादि श्रुत्या पशुकर्मणां निन्दितत्वात् । श्रोत्रियाः – वैदिकाः । ब्रह्मनिष्ठाः – ब्रह्मणि परशिव लिंगे धार्यत्वेन निष्ठा येषां ते ब्रह्मनिष्ठाः लिंगधारिणो वीरशैवा इत्यर्थः । तदुक्तं श्रीनीलकण्ठशिवाचार्येण—' लिंगांगेति वाक्येन मोक्षमार्गैकतत्पराः । अमृतस्येति वाक्येन धारणं

प्रतिपादितम् । तन्निष्ठा एव मनुजा अतिवर्णाश्रमे रताः । त एव हि महात्मानो ब्रह्मनिष्ठा उदाहृताः ' [क्रि. उ. १.१८०] श्रद्धयन्तः – लिंगधारणस्य मुक्तिजनकत्वेन श्रद्धधानास्सन्तः। स्वयमेकर्षिं – एकमेव ऋषिं परशिवो ' विश्वाधिको रुद्रो महर्षिः । ' [महानारायण १.२.३.] इति श्रुतेः । जुह्वते उपासते । ' शिव एको ध्येयः शिवंकरः सर्वमन्यत्परित्यज्य ' (अथर्वशिखा) इति श्रुतेः । न तु शिवेतरं भजन्ति । शिवेतरोपासने शिवेतराशिवत्वफलप्राप्तेर्दुर्वारत्वात् । तथा च स्मृतिः ' शिवं भजन्ति ये नराः शिवं व्रजन्ति ते नराः । शिवेतरं भजन्ति ये शिवेतरं व्रजन्ति ते ॥ ' इति । यैस्तु – अधिकारिभिः शिरोव्रतं – शिरसि व्रतं लिंगधारणात्मकं महाव्रतम् ' मुखे मन्त्रं हृदि ध्यानं मस्तके लिंगधारणम् । ' इति गौतमस्मृतेः । यद्वा शिरसि अथर्वशिरसि व्रतं उपदिष्टं लिंगधारणात्मकं महापाशुपत व्रतं विधिवत् विधिमनतिक्रम्य निगमागमोक्तविधानेनेत्यर्थः। चीर्णं आचरितम् । तेषामेव – उक्ताधिकारिणामेव । एतां – पूर्वोक्तां ब्रह्मविद्यां – वेदविद्यां । वदेत् – ब्रूयात् । लिंगधारणस्य यावज्जीवं नियमेनानुष्ठेयत्वात् । अथर्वशिरस्युपदिष्टत्वाच्च इदमेव लिंगधारणात्मकमहाव्रतं शिरोव्रतं पाशुपतव्रतमत्याश्रमव्रतं शाम्भवव्रतमिति निश्चीयते । तेषामर्थैक्ये बाधकाभावात् । अथर्वशिरो, मुण्डक, कैवल्य श्वेताश्वतर कालाग्निरुद्रोपनिषदा-

युक्त पाशुपतव्रत शिरोव्रतात्याश्रमव्रत शांभवव्रतविशिष्ट-तत्तदधिकारिविशेषान्वेषणापेक्षयैकस्यैवाधिकारिणोऽन्वेषण - सौकर्याच्च। नन्वथर्वशिरसि—'अग्निरिति भस्म' इत्यादिना 'तस्माद्व्रतमेतत्पाशुपतं पशुपाशविमोक्षाय।' इत्यन्तेन भस्म-धारणात्मकमेव पाशुपतव्रतमुक्तमितिचेन्न। तत्पूर्वमेवान्तर्ब-हिर्लिंगधारणात्मकपाशुपतव्रतस्योपदिष्टत्वात्। तथा हि— 'तदेतदुपासितव्यम्' तद्वाग्वदतु तदन्तर्ग्रहणमयं पन्था विततः उत्तरेण येन देवा येन ऋषयो येन पितरः प्राप्नुवन्ति परमं पदं परायणं चेति वालाग्रमात्रं हृदयस्य मध्ये विश्वं देवं जातवेदं वरेण्यं तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्ति-श्शाश्वतीनेतरेषाम्।' अस्यार्थः तदेतद्दहराकाशरूपं प्राण-लिंगं उपासितव्यं मुमुक्षुणानुसन्धातव्यम्। तत् प्रकृतं लिंगमेव। वाक् – वागिन्द्रियं। वदतु – प्रणवसहितपंचा-क्षरात्मकपरविद्यादिद्वारा स्तुतिं करोतु। तत् प्रकृतं लिंग-मेव अन्तः – आधारादिस्थानेषु आचारादिलिंगरूपेण स्थितं सत् ग्रहणं – ग्रहणयोग्यं धारणार्हमित्यर्थः। अयं पन्थाः लिंगधारणरूपो मोक्षोपायः। विततः – प्रसिद्धः ऋग्वेदादिषु। देवाः – हरिब्रह्मादयः। उत्तरेण येन लिंगधारणात्मकेन पथा परमं सर्वोत्कृष्टम्। परायणं – सर्वोर्ध्वस्थानभूतम्। पदं – परशिवं प्राप्नुवन्ति। सामरस्येन प्रयान्तीत्यर्थः। 'ब्रह्मविष्णुसुरेशादिदेवताः परया मुदा। शिरोभिर्धारयन्त्येते

शिवलिंगमहर्निशम् ॥ ' इति कामिकागमवचनात् । येन – उत्तरेण पथा पितरः प्राप्नुवन्ति । तदुक्तं शंकरसंहितायां– 'कांक्षन्ति सर्वे पितरः कुले नः संभूय पुत्राः शिवभक्तियुक्ताः । सन्तो भविष्यन्ति विशुद्धभावास्तेषामथैको विभृयाच्च लिंगम् ॥ तस्य प्रभावाद्वयमीशलोकं प्राप्स्यामहेऽनन्त सुतृप्तिभाजम् । इत्थं हि स्वर्लोकगतिं गतास्ते कांक्षन्ति नित्यं पितरश्शिवैक्यम् ॥ ' इति ऋषयः भृगूपमन्युदेवल दधीचि दूर्वास वसिष्ठ कपिल गौतम वामदेवादि मुनिजनाः येन लिंगधारणात्मकेन उत्तरेण सर्वोत्कृष्टेन पथा मोक्षोपायेन प्राप्नुवन्ति । तदुक्तं कामिकागमे 'कण्ठेषु हरकण्ठादि मुनयो मनवस्तथा । सर्वदा शिवलिंगं तु धारयन्ति यजन्ति च ॥ ' इति ब्रह्माण्डपुराणे शैवसंहितायां व्यासजैमिनिसंवादे 'पाणिनिश्च कणादश्च कपिलो गौतमादयः । प्रसादसेवनध्यानादर्चनाद्धारणादपि ॥ जाता दर्शनकर्तारः श्रावयन्ति जगत्त्रयम् ' इति । हृदयस्य मध्ये – हृदयकमलमध्ये, वालाग्रमात्रं – वालाग्रमिवातिसूक्ष्मम् नीवारशूकादप्यतिसूक्ष्ममित्यर्थः । 'नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा । नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा ॥ तस्याः शिखाया मध्ये तु परमात्मा व्यवस्थितः ॥ ' इति श्रुतेः । विश्वं – विश्वात्मकं, 'सर्वं खल्विदं ब्रह्म ' इति श्रुतेः । देवं – स्वप्रकाशं, जातवेदं – अग्निरूपम् 'ज्वालामालाकुलं भाति विश्व-

स्यायतनं महत् । तस्यान्ते सुषिरं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितम् । तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतो मुखः । [म. नारायण] इति श्रुतेः । वरेण्यं उपास्यं प्राणलिंगम् । 'तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः ॥' इति दहरोपास्यं प्रस्तूय समनन्तरानुवाके 'ऊर्ध्वाय नमः, ऊर्ध्वलिंगाय नमः' इत्यादिना तस्योपास्यस्य लिंगरूपत्वव्यपदेशात् । 'अंगुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ॥' (कठ) इति श्रुत्या तस्य विधूमाग्निरूपत्व व्यपदेशाच्च । तं – हृदयकमलमध्यस्थितचिन्मयप्राणलिंगरूपम् । आत्मस्थं – स्वात्मनि स्थितं परमात्मलिंगं 'तिलेषु तैलं दधिनीव सर्पिरापः स्रोतस्वरणीषु चाग्निः । एवमात्मनि गृह्यतेऽसौ सत्येनैनं तपसा योऽनुपश्यति ।' [श्वे. १.१४] इति श्रुतेः । ये धीराः – अधिकारिणो वीरशैवाः । अनुपश्यन्ति – स्वसामरस्येन साक्षात्कुर्वन्ति । तेषामेव वीराणां शाश्वतिः नित्या शान्तिः मुक्तिः । 'ईशं तं ज्ञात्वाऽमृता भवन्ति ॥' [श्वे. ३.६] 'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति [श्वेत. ६.१९] इत्यादि श्रुतेः । 'प्राणेष्वन्तर्मनसो लिंगमाहुः यस्मिन् क्रोधो या च तृष्णा क्षमा च । तृष्णां छित्वा हेतुजालस्य मूलं बुध्या संचिन्त्य स्थापयित्वाऽथ रुद्रे रुद्र एकत्वमाहुः । रौद्रं शाश्वतं वै पुराणमिष्टमूर्जं तपसानुयच्छति । व्रतमेतत्पाशुपतम् ॥' [अथर्व. शि.अ. ४] । अस्यार्थः

प्राणेषु – पंचप्राणेषु अन्तर्मनसः – अन्तर्हृदयस्य । लिंगं – प्राणलिंगमिति आहुः । शिवतत्त्वज्ञानिनो वदन्ति । यस्मिन् सूक्ष्मशरीरे क्रोधो वर्तते या च तृष्णा वर्तते क्षमा च वर्तते हेतुजालस्य – संसारहेतुजालस्य मूलं – मूलभूतां, तृष्णां क्षयिष्णुब्रह्मादिपदकांक्षारूपां छित्वा वैराग्येण छेदयित्वा बुध्या प्राणलिंगाकारमत्या, संचिन्त्य – संध्यात्वा रुद्रे रुद्रा त्मके प्राणलिंगे स्थापयित्वा, प्राणप्रधान सूक्ष्मशरीरं संस्थाप्य, रुद्रे लिंगस्वरूपे पराशिवे एकत्वं सामरस्यं आहुः इति। तदुक्तं रेणुकभगवत्पादाचार्यैः ' शिष्यस्य प्राणमादाय लिंगे तत्र निधापयेत् । तल्लिंगं तस्य तु प्राणे स्थापयेदेकभावतः ॥ ' इति । रौद्रं रुद्रात्मकं शाश्वतं नित्यं पुराणं चिरंतनम् । ऊर्ज- मूर्जितं इष्टलिंगमानन्दरूपं तपसा शिवपूजासामग्रीसम्पाद- नार्थं देहसंशोषरूपेणानुयच्छति मोक्षं ददातीत्यर्थः । एतत् व्रतं – एतत् अंतर्बहिर्लिंगधारणरूपं व्रतं पाशुपतं शैवमि त्यर्थः । अग्रे – ' अग्निः ' इत्यादिना एतल्लिंगधारणमहाव्रतां गस्य भस्मधारणस्योक्तत्वात् । न केवलं भस्मधारणं पाशु- पतव्रतम् । किंतु अंतर्बाहिर्लिंगधारणमेव पाशुपतव्रतमिति सुस्पष्टं ज्ञायमानत्वात् । नन्वस्तु अथर्वशिरस्युपदिष्टमन्तर्ब- हिर्लिंगधारणात्मकव्रतं पाशुपतव्रतम् । तस्य शिरोव्रतत्वे किं मानमिति चेदुच्यते । व्रतं पाशुपतं चीर्णं यैर्द्विजैरादरेण तु । तेषामेवोपदेष्टव्यमिति वेदानुशासनम् ॥ ' इति सूतसंहितायां

शिरोव्रतस्य पाशुपतव्रतापरपर्यायत्वेन कथनात् । एत. द्व्याख्यानकृन्माधवाचार्येणापि—'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' इति मन्त्रभागस्य वेदानुशासनपदाभिप्रेतत्वेन प्रदर्शनाच्च । किं च लिंगांगसंगिनांवत्स पुनर्जन्म न विद्यते । एष पाशुपताचारः पशुपाशनिवृत्तये ॥ सर्ववेदान्तसारोयमत्याश्रम इति श्रुतिः ॥ परब्रह्मिदं लिंगं पशुपाशविमोचकम् । यो धारयति सद्भक्त्या स पाशुपत उच्यते ॥ शरीरत्रितये भक्त्या लिंगं परशिवात्मकम् । यो धृत्वा विचरेद्भूमौ स पाशुपत उच्यते ॥ लिंगं शिवो भवेत् क्षेत्रमंगं संयोग आश्रयः । तस्माल्लिंगांग संयुक्तो योऽपि सोऽत्याश्रमी भवेत् ॥ ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तु वा । यस्तु लिंगांगसंयुक्तः स एवात्याश्रमी भवेत् ॥' इत्यादित्य लिंग स्कान्दपुराणादि वाक्येषु पाशुपतात्याश्रमव्रतयोर्लिंगधारणव्रतपर्यायत्वेन निर्देशात् । पूर्वोक्त सूतसंहितावाक्येन शिरोव्रतस्य पाशुपतव्रतपर्यायत्वेन निर्दिष्टत्वाच्च । यावज्जीवं नियमेनानुष्ठेय लिंगधारणमहाव्रतमेव शिरोव्रतमिति बाढं जानीम । तस्मान्न पराभिमतं शिरस्यग्निधारणाग्निपात्रधारणांगारपात्रधारणरूपं शिरोव्रतं पूर्वोक्तानेकोपबृंहण वाक्यविरोधात् । उपबृंहणानुसारेणैव श्रुत्यर्थस्य वक्तव्यत्वात् । 'यश्चतुर्वेदविद्विप्रः पुराणं वेत्ति नार्थतः । तं दृष्ट्वा भयमाप्नोति वेदो मां प्रतरेदिति ॥' इति

सूतसंहिता वचनात् । ' इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरेदिति ॥ ' इति महाभारते व्यासवचनाच्च ॥ १० ॥

लिंगधारणस्य ब्रह्मविद्यांगत्वं व्यतिरेकमुखेनोक्त्वा प्रकृतकथामुपसंहरति—

तदेतत्सत्यमृषिरंगिराः
पुरोवाच नैतदचीर्णव्रतोऽधीते ।
नमः परमऋषिभ्यः
नमः परमऋषिभ्यः ॥ ११ ॥

' तदेतदिति ' । तदेतत् – प्रकृतमक्षरं परशिवब्रह्म सत्यं – त्रिकालाबाध्यम् । पुरा – पूर्वकाले । अंगिराः – अंगिरस् नामा ऋषिः । उवाच – शौनकाय उक्तवानित्यर्थः । किंचैतत् – ब्रह्मविद्यारूपम् । अचीर्णव्रतः – न चीर्णमाचरितं शिरस्यथर्वशिरस्युपदिष्टमन्तर्बहिर्लिंगधारणात्मकं व्रतं पाशुपतव्रतं येन सः पुरुषः । नाधीते – न पठति । यावज्जीवं नियमेनानुष्ठेयं यदन्तर्बहिर्लिंगधारणमहाव्रतं तद्रहितेन नाध्येतव्या ब्रह्मविद्येत्यर्थः । ' तेषामेवैतां ब्रह्मविद्यां वदेत ' इत्यचीर्णव्रतायैतदध्यापनं निषिद्धम् । अस्मिन् वाक्ये अचीर्णशिरोव्रतस्याध्ययनं निषेधितमिति विशेषोऽवगन्तव्यः । नमः

परमऋषिभ्यः – परमपरशिवब्रह्म। ऋषन्ति – गच्छन्ति साक्षात् कुर्वन्तीति परमर्षयः। ये परशिवशिष्यप्रशिष्याः चतुर्मुखादि शौनकान्तास्तेभ्यो वीरशैवेभ्यः नमः। द्विरुक्तिरादरार्था समाप्त्यर्था वा ॥ ११ ॥

आस्थान विदुषा हुब्बल्लिमण्डलान्तर्गत उमचिगिपुरमध्य
विद्योतमान वृष्टिमठाध्यक्षेण ब्रह्मश्री
शङ्करशास्त्रिणा विरचितमिदं
मुण्डकोपनिषद्वीरशैव
भाष्यं समाप्तम्।



हर गुरु चर चरणार्पितं भूयात्।

भव्यं भाष्यविभूषणं भवहरं श्रीवीरशैवाभिधम्
भाष्यं बालिशहृत्तमोपहरणादित्यं सुधीसन्नुतम्।
श्रीमन्मुण्डकमण्डनं परमतव्याख्यानसत्खण्डनं
भूतेशार्पितमस्तु षट्स्थलपरं सुज्ञानसंपत्प्रदम् ॥

वियदृतुवसुब्रह्म मितेऽब्दे शालिवाहने।
चतुर्थ्यां चैत्रशुक्लस्य भाष्यमेतत् समापितम् ॥

शालि. १८६०. क्रि. श. १९३८.

# ಪ್ರಬೋಧ ಪುಸ್ತಕಮಾಲೆ (೧೯೪೬)

## ಪ್ರಬೋಧ ಮುದ್ರಣ ಮತ್ತು ಪ್ರಕಟನಾಲಯ, ಮೈಸೂರು.

(ಎಂ. ಜಿ. ಎನ್. ವಿರಚಿತ)

—೦—

| | |
|---|---|
| ಪಕ್ಷ್ಮಲಾಕ್ಷಿ . . . ು ಕಾವ್ಯ) | ೦–೫೦ |
| ಶಿವನಸೋ . . . ಕನಾಟಕ) | ೧–೦೦ |
| ಸಿರಿಗನ್ನಡ . . . ಮಾನ್ಯ ಪ್ರತಿ) | ೧–೫೦ |
| ಆ॥ ಕಾ॥ ಬಸ . . . ನ-ಕೃತಿವಿಮರ್ಶೆ) | ೧–೫೦ |
| ಗುಬ್ಬಿತೋಟ | ೧–೦೦ |
| ಶಿವರಾತ್ರಿ-ಶಿ | ೩–೦೦ |
| ಗೀತೆ, ಅಂತ . . . ಣಿ (ಕನ್ನಡ) | ೧–೫೦ |
| ಸಂಸ್ಕೃತ ಸ್ತವ . . . ವಸ್ತ್ರಶಾಸ್ತ್ರೀ) | ೧–೦೦ |
| ಕನ್ನಡ ವಿಕ್ರಮೋ . . . ಟಿಟೊ ) | ೧–೦೦ |
| ಚಾರುದತ್ತ | ೧–೬೦ |
| ವೀರಶೈವ ಸದ . . . ನ | ೧–೫೦ |
| ವೀರಶೈವ ವಿಶೇ . . . | ೧–೦೦ |
| ಸಂಕ್ಷಿಪ್ತ ಷಟ್‌ಸ್ಥ | ೦–೫೦ |
| ಶ್ರೀಶೈಲ ಜಗದ್ಗು . . . (ಸಂಸ್ಕೃತ) | ೨–೦೦ |
| ಶ್ರೀಶೈಲ ಪಂಡಿತಾ . . . ಧ್ಯ ಚರಿತ್ರಮು (ಪುಲ್ಲಕವಿ) (ತೆಲಗು) | ೫–೦೦ |
| ಸ್ತೋತ್ರಮಂಜರಿ: ೦–೨೫ ಸ್ತೋತ್ರಸಂಗ್ರಹ | ೦–೨೫ |
| ಇಷ್ಟಲಿಂಗವಿಜ್ಞಾನ (ದೇವರಾಜ ಬ॥ ನಿಧಿ ಬಹುಮಾನಿತ) | ೧–೦೦ |
| ಕೈವಲ್ಯೋಪನಿಷತ್‌ಭಾಷ್ಯಂ (ಕನ್ನಡ ಅನುವಾದ ಸಹಿತ) | ೨–೫೦ |
| ಮುಂಡಕೋಪನಿಷತ್‌ಭಾಷ್ಯಂ („) (ದೇವ. ನಿಧಿ. ಬಹುಮಾನ) | ೩–೫೦ |
| ವೀರಶೈವ ಪ್ರಯೋಗರತ್ನಂ (ಟಿಪ್ಪಣಿ ಸಹಿತ) | ೬–೦೦ |
| ವೀರಶೈವಾಗಮ ಪ್ರಯೋಗರತ್ನಂ ( „ ) | |

———